अर्हम् ।

पूर्वतनाचार्यप्रणीतं

# श्रीकल्पसमर्थनम् ।

(कल्पसूत्रान्तरगताधिकारबोधकं)




Rs. 3/=


श्रीमालवदेशान्तर्गतरत्नपुरीयश्रेष्ठिऋषभदेवकेशरीमलजीजैनश्वेतांबरसंस्थया सूर्यपुरीय-
'मोहनलाल मगनलाल बदामी' इत्यस्य स्वायत्ते 'श्रीजैन आनंद मुद्रालये' मुद्रापितं ।

वीरसंवत् २४६४ } विक्रमसं. १९९४ }

पण्यम् ३-०-०

{ क्राइष्टसन् १९९३ { प्रतय : ८५०


23

## श्रीकल्पसमर्थनस्योपक्रमः।

उपादीयतामुभाकर्णिमूर्धन्याः! कल्पसमर्थनाख्योऽयं ग्रन्थो भवद्भिः, एतस्य रचनाकालः वैक्रमीयत्रयोदशशताब्द्याः परतः सप्तदशवैक्रमीयशताब्द्याश्चार्वागभूदिति ज्ञायते, यतः श्रीमन्तस्तपोगच्छीयाः काञ्जिकं पानकाहारे जगृहुः, शास्त्रोक्तं च तद्ग्रहणं तथापि शास्त्रोत्तीर्णपथमूला जिनप्रभाद्याः खरतरा आंचलिकाश्च तन्निराचक्रुस्तत्समाधानं शास्त्रोक्तिपुरस्सरं कुर्वन्तः अच्छुत्तिरूपं तत्कल्पितदोषमपि निराचक्रुः, नायं ग्रन्थः श्रीपर्युषणाकल्पस्य सूत्राणां व्याख्यानपरः, ततो नास्य पर्युषणाकल्पस्य चूर्ण्या टीप्पनेन च गतार्थता, कल्पवृत्तयः किरणावल्यादयस्तु परस्तादेवास्मादाविर्भूता इति मिथः तुलनाकर्त्तॄणां न नवीनं, मूलसूत्राणामेषां सुगमतामाकलय्य अन्तरधिकारा एव ग्रथिता ग्रन्थकारैः, के एते इति प्रश्नसमाधानं तु तथाविधस्यात्रान्यत्र चोल्लेखस्याभावान्न कथयितुं शक्यते, परं शासनधुरन्धरस्य या कांजिकविषया सामाचारी पोषिता सेति निर्विवादमेव श्रीमतांमतपोगच्छीयत्वं, ग्रन्थकाराश्चेमे यथार्थसंधा इति न किमपि सूत्रं व्याख्यातवन्तः, किंच नैते संमूर्छिमाचार्यतत्परम्परानुगतयावज्जम्बूकसमा मिथ्याख्यातिसंतोषिणः, न च शास्त्रानुसारिपरंपरागतमतलोपकाः, यथेदानींतना उपस्थापनोत्थापकपानकाकारप्रलापिपवित्रतमसौराष्ट्रानार्यताप्रतिपादकयोगोत्थापनाप्रवीणात्मारामानुगताः शास्त्रानुसारिपरंपरागततिथिमर्यादालोपलोलुपा अष्टमाष्टाभेदवादिनो दानप्रेमरामजम्बूकाद्याः, किंतु शास्त्रानुसारितपोगच्छसामाचारीसमाचरणचतुराः, अत एव कांजिकपक्षं समर्थयामासुः सामाचार्यां, विशेषस्त्वेतदीयो ग्रन्थावलोकनबललभ्यः एवेति सुधियः स्वयमेवावभोत्स्यन्ते इति विलोकनयाचनं तस्मादरमित्यर्थयते शास्त्रानुगं श्रीसंघमिति।

जामनगर वि. सं. १९९४ मार्गशीर्षशुक्ला तृतीयायां आनन्दसागरः

श्री देवचंद लालभाइ जैन पुस्तकोद्धारे—

श्रीवीतरागाय नमः

# श्रीकल्पसमर्थनम् ।

## पूर्वाचार्यप्रणीतं कल्पान्तर्वाच्यम्

॥ ॐ नमः श्रीवर्धमानाय ॥ (वाच्यानि) पुरिमचरिमाण कप्पो मंगलं वद्धमाणतित्थम्मि । इह परिकहिआ जिण१ गणहराइथेरावलि२ चरित्तं३ ॥१॥ (कल्पदशकं) आचेलक्कु१ देसिय२ सिज्जायर३ रायपिण्ड४ किइकम्मे५। वय६ जिट्ठ७ पडिक्कमणे८ मासं९ पज्जोसवणकप्पे१०॥२॥ आचेलुक्को धम्मो पुरिमस्स य पच्छिमस्स य जिणस्स । मज्झिमगाण जिणाणं होइ सचेलो अचेलो य१ ॥३॥ संघादुद्देसेणं ओघाइहिं समणाइ अहिगच्च । कडमिह सव्वेसिं चिय न कप्पई पुरिमचरिमाणं ॥४॥ मज्झिमगाणं तु इमं जं कडमुद्दिस्स तस्स चेवत्ति । नो कप्पइ सेसाण उ कप्पइ तं एस मेरत्ति२ ॥५॥ सिज्जायरत्ति भन्नइ आलयसामी य तस्स जो पिंडो । सो सव्वेसिं न कप्पइ पसंगगुरुदोसभावाओ ॥६॥ जइ जग्गंति सुविहिया करिंति आवस्सयं च अन्नत्थ। सिज्जायरो न होई सुत्ते व कए व सो होइ ॥७॥ तणडगलछारमल्लगसिज्जासंथारपीढलेवाई । सिज्जायरपिंडो सो न होइ सेहो अ सोवहिओ३ ॥८॥ मुदियाइगुणो राया अट्ठविहो तस्स होइ पिंडुत्ति । पुरिमेअराण एसो वाघायाईहिं पडिकुट्ठो ॥९॥ ईसरपभिईहिं तहिं वाघाओ खद्धलोहु दाराणं । दंसण संगो गरहा इअरेसिं न अप्पमायाओ ॥१०॥ असणाईण चउक्कं वत्थं तह पत्त पायपुंछणए । निवपिंडम्मि न कप्पइ पुरिमंतिमजिणज-

ईणं तु४ ॥११॥ किइकम्मंपि य दुविहं अब्भुट्ठाणं तहेव वंदणयं । समणेहिं समणीहि य जहारिहं होइ कायवं ॥१२॥ सबाहिं संजईहिं किइकम्मं संजयाण कायवं । पुरिसुत्तमुत्ति धम्मो सवजिणाणंपि तित्थेसुं५ ॥१३॥ पंचवओ खलु धम्मो पुरिसस्स य पच्छिमस्स य जिणस्स । मज्झिमगाण जिणाणं चउवओ होइ विन्नेओ ॥ १४ ॥ नो अपरिग्गहियाए इत्थीए जेण होइ परिभोगो । ता तविरई-इच्चिअ अबंभविरइत्ति पन्नाणं ॥ १५ ॥ दुण्हवि दुविहोवि ठिओ एसो आजम्ममेव विन्नेओ । इअ वयभेया दुविहो एगविहो चेव तत्तेणं६ ॥१६॥ उवठावणाइ जिट्ठो विन्नेओ पुरिमपच्छिमजिणाणं । पवज्जाए उ तहा मज्झिमगाणं निरइयारो७ ॥१७॥ सपडिकमणो धम्मो पुरिमस्स०। मज्झिमगाण० कारणजाए पडिकमणं८ ॥१८॥ पुरिमंतिमतित्थगराण मासकप्पो ठिओ मुणेयवो । मज्झिमगाण जिणाणं अट्ठियओ एस विन्नेओ९ ॥१९॥ पज्जोसवणाकप्पो चेवं पुरिमेइअराइभेएणं । उक्कोसेअरभेओ सो नवरं होइ विन्नेओ ॥२०॥ चाउम्मासुक्कोसो सत्तरि राइंदिया जहन्नो य । थेराण जिणाणं पुण नियमा उक्कोसओ चेव ॥२१॥ काऊण मासकप्पं तत्थेव ठिआण तीस मग्गसिरे । सालंवणयाणं पुण छमासिओ होइ जिट्ठुग्गहो ॥२२॥ इत्थ य अणभिग्गहियं वीसइराई सवीसई मासो । तेण परमभिग्ग-हिअं गिहिनायं कत्तिओ जाव ॥२३॥ काइअभूमी संथारए अ संसत्त दुल्लहे भिक्खे । एएहिं कारणेहिं अप्पत्ते होइ निग्गमणं ॥२४॥ राया सप्पे कुंथू अगणि गिलाणे अ थंडिलस्सऽसई । एएहिं० ॥२५॥ वासं वा नोवरमइ पंथा वा दुग्गमा सचिक्खिल्ला । एएहिं० अइकंते होइऽनिग्गमणं ॥२६॥ असिवे ओमोयरिए रायदुट्ठे भए व गेलन्ने । एएहिं० अप्पत्ते० ॥२७॥ दोसासइ मज्झिमगा अच्छंति अ जाव पुवकोडीवि। इहरा उ न मासंपि हु एवं खु विदेहजिणकप्पी१० ॥२८॥ (स्थितास्थित भेदौ)आचेलक्कु१ देसिय२ पडिकमणे३ रायपिंड४ मासेसु५। पज्जुसणाकप्पम्मि य६ अट्ठियकप्पो मुणेयवो ॥२९॥ सिज्जायरपिंडंमि य१ चाउज्जामे२ य पुरिसजिट्ठे अ३ ।

किइकम्मस्स य करणे ठियकप्पो मज्झिमाणंपि ॥३०॥ (तृतीयौषधसमानता) वाहिमवणेइ भावे कुणइ अभावे तयं तु पढमंति१। विइअमवणेइ न कुणइ२ तइयं तु रसायणं होइ३॥३१॥ एवं एसो कप्पो दोसाभावेऽवि कज्जमाणो अ। सुंदरभावाओ खलु चारित्तरसायणं होइ ॥३२॥ एवं कप्पविभागो तइओसहनायओ मुणेयव्वो। भावत्थजुओ इत्थ उ सव्वत्थवि कारणं एयं ॥३३॥ (जीवविशेषः)पुरिमाण दुव्विसुज्झो चरिमाणं दुरणुपालओ कप्पो। मज्झिमगाण जिणाणं सुविसुज्झो सुहणुपालो अ॥३४॥ उज्जुजडा पुरिमा खलु नडाइनायाओ हुंति नायव्वा। वक्कजडा पुण चरिमा उजुपन्ना मज्झिमा भणिया ॥३५॥ (क्षेत्रगुणाः) चिक्खल्ल१ पाण२ थंडिल३ वसही४ गोरस५ जणाउले६ विज्जे७ ओसह८ निचया९ऽहिवई१० पासंडा११ भिक्ख१२ सज्झाए१३ ॥३६॥ सुलहा विहारभूमी१ विआरभूमी२ य सुलहसज्झाओ३। सुलहा भिक्खा य जहिं४ जहन्नयं वासखित्तं तु ॥३७॥ चउग्गुणोववेयं तु, खित्तं होइ जहन्नयं। तेरसगुणमुक्कोसं, दुण्हं मज्झम्मि मज्झिमयं ॥३८॥ कामं तु सव्वकालं पंचसु समिईसु होइ जइयव्वं। वासासु अ अहिगारो बहुपाणा मेइणी जेण ॥३९॥

अयं च श्रीकल्पो दशाश्रुतस्कन्धस्याष्टममध्ययनं, स च नवमपूर्वादुद्धृतः, पूर्वाणि च १,१। २,२। ३,४। ४,८। ५,१६। ६,३२। ७,६४। ८,१२८। ९,२५६। १०,५१२। ११,१०२४। १२,२०४८। १३,४०९६। १४,८१९२। सर्वसङ्ख्या १६३८३। एतावद्धस्तिप्रमाणमषीपुञ्जलेख्यानि। (कल्पमहिमा) आचारात्तपसा कल्पः,कल्पः कल्पद्रुरीप्सिते। कल्पो रसायनं सम्यक्,कल्पस्तत्त्वार्थदीपकः ॥१॥ तवेण बंभचेरेण, कणयदाणेण भावओ। कम्मं खवेइ जं तित्थे, तं कप्पसवणेण य ॥२॥ आजम्म जस्स सड्ढस्स,सम्मत्तस्स निसेवणा। जं पुन्नं भावओ होइ, तं कप्पसवणेण य ॥३॥ एगग्गचित्ता जिणसासणम्मि,पभावणापूअपरायणा जे। तिसत्तवारं निसुणंति कप्पं, भवन्नवं ते लहुसा तरंति ॥४॥ (अनन्तार्थता) सव्वनईणं जा हुज्ज वालुया सव्वोदहीण जं उदयं।

तत्तो अ अणंतगुणो अत्थो इक्कस्स सुत्तस्स ॥ ५ ॥ (प्राकृतगुणाः) बालस्त्रीमन्दमूर्खाणां, नृणां चारित्रकाङ्क्षिणाम् । अनुग्रहार्थं सर्वज्ञैः, सिद्धान्तः प्राकृतः स्मृतः ॥६॥ पाइअ अमिय विपेक्खणह, इअरह गरल गहिल्लि । धवलिय चंदह कुकडी वायस वासि समिल्हि ॥७॥ नेच्छन्ति प्राकृतं मूर्खा, मक्षिकाश्चन्दनं यथा । क्षीरान्नं शूकरा यद्वद्, घूका इव रविप्रभाम् ॥८॥

(वार्षिकमहिमा) मन्त्राणां परमेष्ठिमन्त्रमहिमा तीर्थेषु शत्रुञ्जयो, दाने प्राणिदया गुणेषु विनयो ब्रह्म व्रतेषु व्रतम्। सन्तोषो नियमे तपस्सु च शमस्तत्त्वेषु सद्दर्शनं, सर्वज्ञोदितसर्वपर्वसु परं स्याद्वार्षिकं पर्व च ॥९॥ सम्प्राप्ते च महापर्वण्यस्मिन् विस्मेरभावनैः। विधेयं विधिना नागकेतुनेवाष्टमं तपः ॥१०॥ तपःप्रभावाज्जन्तूनां, जायते किल शाश्वतम् । निर्वाणपदमप्याशु, नागकेतोरिव ध्रुवम् ॥११॥

(नागकेतुकथा) अस्ति पूश्चन्द्रकान्ताख्या, यत्र चन्द्रोदये सति। चन्द्रकान्तगृहप्रोद्यत्सुधास्नानसुखी जनः॥१२॥ राजा विजयसेनाख्यस्तत्रास्ते यस्य सेनया । उन्मूल्य द्विपतः क्षिप्ता, द्रुमा नद्येव पूर्णया ॥१३॥ तत्र चास्ति वणिग्मुख्यः, श्रीकान्ताख्यः समृद्धिभाक् । श्रीसखीनाम भार्याऽस्य, पतिव्रता व्रतप्रिया ॥१४॥ उपयाचितानां लक्षैस्तस्या जातः सुतः क्रमात् । बभूव च तदासन्नं, पर्व पर्यूषणाभिधम् ॥१५॥ करिष्यामोऽष्टमतपोऽत्रैवं कुटुम्बभाषितम् । श्रुत्वा स बालको जातिस्मृत्या प्रत्यशृणोदिति ॥१६॥ उपवासा मया कार्यास्त्रयः पेयं पयोऽपि न । इति निश्चित्य स स्तन्यं, नास्वादति न रोदति ॥१७॥ साश्रुमात्रा ततः पत्युः, कथिते सोऽप्यचीकरत् । बालचिकित्सावेदिभ्यः उपचारान् बहूनपि ॥ १८ ॥ ततोऽपि नैष जग्राह, स्तन्यं कृततपोविधिः। ततश्च मूर्च्छया बालो, निश्चेष्टोऽसौ क्रमादभूत् ॥१९॥ मूर्च्छया छन्नजीवं तं, मृतमित्यवधार्य च । न्यसदन् भुवि तद्वंश्या, निधानमिव दुर्धियः ॥२०॥ ततश्चावधिनाऽपश्यत्, धरणेन्द्रः शिशुं तथा । ज्ञातवानस्य वृत्तान्तं, प्रारभ्य प्राग्भवादपि ॥ २१ ॥ तथा ह्ययं भवे पूर्वे, कस्यापि

वणिजोऽभवत् । सुतत्वेन ततो माता, मृता बाल्येऽस्य दैवतः ॥२२॥ अस्ति तस्य विमाता तु, विमानयति साऽथ तम् । भोजनादावतिस्तोकेऽपराधे कुप्यति स्फुटम् ॥२३॥ क्रमेण यौवनं प्राप, जानन् मानापमानताम् । द्विमातुर्दुर्वचांस्येप,स्वमित्राय न्यवेदयत् ॥२४॥ तेनोचे चेत्तपः सम्यक्, कृतं स्यात् पूर्वजन्मनि । स्वात्मा पराभवस्थानं, न कदाचिद्भवेत्तदा ॥ २५ ॥ श्रुत्वेति स यथाशक्ति, तपश्चक्रे विनीतवान् । मानापमानौ संत्यज्य, लीनोऽभूत्तपसि स्वयम् ॥२६॥ एकदा तृणगेहान्तः, स्मरन् पञ्चनमस्कृतिम् । पर्युषणादिनेऽवश्यं, करिष्याम्यष्टमं तपः ॥२७॥ इत्येवं ध्यानवान् यावदास्तेऽसौ तावदन्यतः। अभूत् प्रदीपनं वायुवशोन्नतप्रदीपनम् ॥२८॥ ततो वायुवशाद्वह्नौ, धावतीतस्ततो द्रुतम् । दध्याविति विमाताऽस्य, यदुपायोऽस्ति सम्प्रति ॥२९॥ एतत्प्रदीपनव्याजान्निक्षिप्याग्निं कुटीरके । मारयामि मपत्नीजं, मनःशल्यं यदेप मे ॥३०॥ ध्यात्वेति दूरतोऽक्षेपि (वह्निं तस्योटजे) तया । स तथैव तपोध्यानलीनः प्रज्वलितः क्षणात् ॥३१॥ तपोध्यानैकचित्तत्वात्तद्विज्ञायानलव्यथाम् । मृत्वा जज्ञे सुतत्त्वेन, श्रीकान्तस्य त्वपुत्रिणः ॥३२॥ नन्वेप पूर्वसंस्कारात्, श्रुत्वा पर्युषणादिनम्। चक्रेऽष्टमतपस्तेन, पूर्वप्रतिश्रुतं शिशुः॥३३॥ मूर्च्छितत्वान्मृतं मत्त्वा, पितृभ्यां निहितो भुवि । यावन्न म्रियतेऽद्यापि, तावत् संजीवयाम्यहम् ॥ ३४ ॥ ध्यात्वेति धरणेन्द्रोऽथारक्षत् स्वीयप्रभावतः। भून्यस्तमेव तं बालं, यथा स म्रियते न हि ॥३५॥ ततः श्रुत्वा शिशोर्वार्तां, श्रीकान्तः पुत्रमृत्युना । जाते हृदयसङ्कटे, मृत्युमाप क्षणादपि ॥३६॥ ततो विजयसेनाख्यो, राजा विज्ञाय तं मृतम्। अपुत्रमृतसर्वस्वग्रहणायादिशन् भटान् ॥३७॥ ते राजपुरुषाः क्रूराः, श्रीकान्तस्य गृहाद्धनम् । गृह्णन्तो धरणेन्द्रेण, पुरुषीभूय वारिताः ॥ ३८ ॥ तैरेत्य कथितं राज्ञे, राजाऽपि, स्वयमेत्य तम् । धरणेन्द्रमुवाचाशु,किं व्यासेधं करोपि भोः? ॥३९॥ अथाह धरणेन्द्रोऽपि,राजन् ! गृह्णासि किं धनम्?। निर्वीरायाः

स्त्रियो ह्यस्या, दयाहीनोऽतिनिष्ठुरः ॥४०॥ राजनीतिरियं राज्ञां, प्राचाऽप्युपचिता यतः। तेन गृह्णामि निर्वीरास्वापतेयमनुक्रमात् ॥४१॥ धरणोऽपि पुनः प्रोचे, जीवन्नस्य च पुत्रकः। राजाऽऽह क्वास्ति ? स प्राह, निखातोऽस्तीह रत्नवत् ॥४२॥ ततश्चोत्खानितो राज्ञा, बाले जीवति सत्यथ । आगत्य श्रीसखीमाता, रुदती तमदीधपत् ॥४३॥ धृत्वाऽथ धरणेन्द्रोऽपि, स्वरूपं तस्य तां कथाम् । राज्ञो निवेद्य बालाय, दत्त्वा हारं तिरोदधे ॥४४॥ श्रुतया कथया तस्य, राजा विस्मयमादधत्। यत्नेनायं शिशुः पाल्य, इत्यादिश्य गृहं ययौ ॥४५॥ श्रीकान्तस्य कृते शीघ्रं, स्वजनैरूर्ध्वदेहिके। नागकेतुरिति प्रीत्या, दत्तं नाम शिशोस्तदा ॥४६॥ बालकोऽपि चतुष्पर्व्यां, चतुर्थं कुरुते तपः । स चतुर्मासके षष्ठं, कल्पं पर्युषणादिषु ॥४७॥ कुर्वन्नेवं सदाऽप्येष, नागकेतुर्जितेन्द्रियः । यौवनेऽपि ययौ नैव, विकारं मान्मथं क्वचित् ॥४८॥ जिनेन्द्रपूजानिरतः, साधूपासनतत्परः। पौषधसामायिकादीन्यपालयद् व्रतानि च ॥४९॥ चतुष्पथेऽन्यदा कोऽपि, सज्जनोऽपि जनो व्रजन्। जघ्ने विजयसेनेन, ज्ञातचौरकलङ्कतः॥५०॥ आर्त्तध्यानात् स मृत्वाऽभूद्, व्यन्तरोऽवधिना ततः। स विज्ञाय स्ववृत्तान्तं, चुकोप च महीभुजे ॥५१॥ राजानं स सभासीनमागत्यादृश्यरूपभृत् । आहत्य पार्ष्णिना बाढं, व्यन्तरोऽपातयद्भुवि ॥५२॥ व्यन्तरेण हतो राजा, चक्रंदोच्चैर्वमन्नसृग् । बभूव च सभालोकः, कान्दिशीकः किमेतकम् ? ॥५३॥ अथासौ व्यन्तरो यावन्नगरं तावतीं शिलाम्। विकृत्य गगने लोकं, भापयामास दुर्गिरा ॥५४॥ नागकेतुस्तदा दध्यौ, सङ्घोऽस्त्यत्र चतुर्विधः। जिनबिम्बागमौकांसि, तद्धाऽप्येषां क्षयोऽधुना ॥ ५५ ॥ ध्यात्वेत्युच्चैः समारुह्य, प्रासादं पाणिना शिला। दध्रे तेन तपःशक्त्या, पतन्ती व्यन्तरादपि ॥ ५६ ॥ व्यन्तरस्तत्तपःशक्तिमशक्तः सोढुमाकुलः । आगत्य प्रणनामास्मै, संजहार च तां शिलाम् ॥५७॥ वचनान्नागकेतोश्च, व्यन्तरः शान्तिमीयिवान्। राजानं पटूकृत्य द्राग्, ययौ च गृहमात्मनः॥५८॥

ततो गतो नृपस्यापि, तपोलब्ध्याऽभिवन्द्यताम्। नागकेतुरथान्येद्युः, श्रीजैनभवने ययौ ॥५९॥ यथाविधि जिनेन्द्रस्य, पूजां कुर्वन्तमात्मना। पुष्पमध्यस्थितः सर्प्पस्तं ददंशाङ्गुलौ दृढम् ॥६०॥ नागकेतुर्गताशङ्कस्तं सर्प्पं न्यस्य कुत्रचित्। जिनेन्द्रमूर्त्तेः पुरतो, ध्यानमालम्ब्य तस्थिवान् ॥६१॥ समीरविजयाल्लीनं, ममारैतन्मनः क्षणात्। घातिकर्म्मक्षयाज्जातं, केवलज्ञानमुज्ज्वलम् ॥६२॥ ततः शासनदेव्याऽस्य, द्रव्यलिङ्गं समर्प्पितम्। भव्यान् प्रबोधयंश्चायं, विजहार भुवस्तले ॥६३॥ इह लोके परलोके दुष्प्रापं सारभूतमत्यन्तम्। तत्तपसा सुलभं स्यात् तपसि यतध्वं ततो भावात् ॥६४॥ (आर्या) तपोविषये नागकेतुकथा ॥

(सूत्रं८) माणुम्माणपमाणेत्ति, जलदोण१ मद्धभारं२ समुहाइं समूसिओ अ जो नव उ३। माणु१ म्माण२ पमाणं३ तिविहं खलु लक्खणं नेयं ॥१॥ अष्टशतं१ षण्णवतिः२ परिमाणं चतुरशीतिरिति पुंसाम्३। उत्तम१ सम२ हीनानां३ स्वदेहराङ्गुलसमानेन ॥२॥ विषमसमैर्विषमसमा विषमैर्विषमाः रामैः समाचाराः। करचरणकर्णनासादन्तौष्ठनिरीक्षणैः पुरुषाः ॥३॥ अस्थिष्वर्थाः सुखं मांसि, त्वचि भोगाः स्त्रियोऽक्षिषु। गतौ यानं स्वरे चाज्ञा, सर्वं सत्त्वे प्रतिष्ठितम् ॥४॥ यथा नेत्रे तथा शीलं, यथा नासा तथाऽऽर्जवम् यथा रूपं तथा वित्तं, यथा शीलं तथा गुणाः ॥५॥

(सूत्रं ९) इतिहासपंचमाणन्ति, ब्रह्मा१ म्भोरुह२ विष्णु३ वायु४ भगवत्संज्ञं५ ततो नारदं६, मार्कण्डेय७ मथाग्निदैवतमिति८ प्रोक्तं भविष्यं तथा९। तस्माद् ब्रह्मविवर्त्तसंज्ञमुदितं१० लैंगं११ वराहं१२ स्मृतं, स्कन्दं१३ वामन१४ मत्स्य१५ कूर्म्म१६-गरुडं१७ ब्रह्माण्ड१८ मष्टादशम् ॥१॥ वागरणेत्ति ऐन्द्रं१ पाणिनि२ जैनेन्द्र३, शाकटायनवामनम्४। चान्द्रं५ सरस्वतीकण्ठाभरणं६ बुद्धिसागरम्८ ॥२॥ विश्रान्तविद्याधरं च९, भीमसेनं१० कलापकम्११। मुष्टिव्याकरणं१२ शैवं१३, गौडं१४ नन्दिजयोत्पलम्१५

॥३॥ सारस्वतं१६ सिद्धहैमं१७,जयहेमं तथाऽपरम्१८॥ इति व्याकरणं सर्वं,शब्दप्राभृतसम्भवम्॥४॥ अथवाऽष्टौ महाव्याकरणानि– ब्राह्म१ मैशान२ मैंद्रं च३, प्राजापत्यं४ बृहस्पतिम्५। त्वाष्ट्र६मापिशलं चेति७,पाणिनीय८मथाष्टमम् ॥५॥ बहुसु बंभन्नएसुत्ति शिक्षा१ कल्प२ व्याकरण३ छन्दो४ ज्योति५ निरुक्तयः६। अङ्गानि६ चत्वारो वेदाः१०,मीमांसा११ न्यायविस्तरः१२। पुराणं१३ धर्म्मशास्त्रं च१४, विद्या एताश्चतुर्दश ॥६॥

(सूत्रं१३) 'सयक्कउ'त्ति पृथिवीभूषणे पूर्वं, प्रजापालो नृपोऽजनि। श्रेष्ठीशः कार्तिकस्तत्र, राजमान्यो महर्द्धिकः ॥७॥ तेन श्रद्धावता श्राद्धप्रतिमानां शतं कृतम्। शतक्रतुरिति ख्यातिस्ततो लेभे च सर्वगा ॥२॥ मासोपवास्यगात्तत्र,परिव्राजकगैरिकः। तदादृतो जनः सर्वोऽप्यभवत् कार्तिकं विना ॥३॥ तद् ज्ञात्वा गैरिको रुष्टः,स्पष्टं राज्ञः पुरो जगौ। परिवेषयति श्रेष्ठी,तदैमि त्वद्गृहे नृप!॥४॥ ततः श्रेष्ठिगृहे राजा,गत्वा धृत्वा च तं भुजे। ऊचे भ्रातर्ममावासे,गैरिकं त्वं प्रभोजय ॥५॥ सोऽवक् त्वत्पुरवासित्वात्, करिष्येऽहं त्वदाज्ञया। धृष्टोऽसीत्यङ्गुलिं भुञ्जन्, स चालयति तं प्रति ॥६॥ दध्यौ च प्राव्रजिष्यं प्राग्, नाभविष्यत्तदा ह्यदः। अष्टश्रेष्ठिसहस्रेण,प्राव्राजीत् सुव्रतान्तिके॥ ७ ॥ पठित्वा द्वादशाङ्गीं स, इन्द्रोऽभूद्द्वादशाब्दकैः। गैरिको वाहनं तस्यैरावणाख्यं स्वकर्म्मतः ॥८॥

(सूत्रं१५) धम्मसारहीणंति,तथाहि श्रीमहावीरो,विहरन्नेकदा महीम्। उद्याने समवासार्षीत् ,पुराद्राजगृहाद् बहिः॥१॥ पुत्रः श्रेणिकधारिण्योस्तत्र श्रुत्वा विभोर्गिरः। प्रबुद्धोऽष्टौ प्रियास्त्यक्त्वा,मेघो दीक्षामुपाददे॥२॥ ग्रहणासेवनाशिक्षाशिक्षायै स्वामिनाऽर्पितः। स्थविराणामसौ तैस्तु,शायितो द्वारवेश्मनि॥३॥ निर्यद्भिः प्रविशद्भिश्च,साधुभिस्तत्र सूरिभिः। सोऽसकृज्जानुहस्ताङ्घ्रिकूर्प्पराद्यैरघट्यत

॥४॥ प्रमृजन्निश्रथ सर्वाङ्गं,तथाऽगुण्ड्यत रेणुना। यथाऽसौ क्षणमप्येकं,निद्रां प्राप न तन्निशि ॥५॥ दध्यौ सोऽथ पुरो मेऽमी,सादराः साधवोऽभवन्। इदानीं पाणिपादाद्यैर्लेष्टुवत् घट्टयन्ति माम् ॥६॥ पूर्वं क मे सुखावासो,दुःखावासो ह्ययं क च?। क पुष्पशय्यास्वापो मे ?, श्रस्तरे लुठनं क च ? ॥७॥ सहिष्ये दुःसहां हंत, कथमित्थं कदर्थनाम् ?। तत् प्रातः प्रभुमापृच्छय, श्रयिष्ये गृहितां पुनः ॥८॥ इति ध्यात्वोद्गते सूर्ये, गत्वाऽर्हंतं ननाम सः। बभाषे तमथो वीरः, सुधामधुरया गिरा ॥९॥ वत्स ! निर्गच्छदागच्छत्-साधुभिर्घट्टितोऽथ किम्?। [को चक्कवट्टिरिद्धिं चइउं दासत्तणं समहिलसइ ?। को व रयणाइं मोत्तुं परिगिण्हइ उवलखंडाइं? ॥१॥ नेरइयाणवि दुक्खं झिज्जइ कालेण किं पुण नराणं?। ता न चिरं तुह होही दुक्खमिणं मा समुव्वियसु ॥ २ ॥ जीअं जलबिंदुसमं संपत्तीओ तरंगलोलाओ। सुविणयसमं च पिम्मं जं जाणसु तं करिज्जासु ॥ ३ ॥ वरमग्गिम्मि पवेसो। वरं विसुद्धेण कम्मुणा मरणं। मा गहियव्वयभंगो मा जीअं खलिअसीलस्स ॥४॥] दुरध्यासीर्भवौ पूर्वौ,मेघानघमनाः शृणु ॥१०॥ अतो भवात् तृतीयेऽभूर्वैताढ्यभुवि षड्रदः! हस्ती सहस्रयूथेशस्त्वं सुमेरुप्रभः सितः ॥११॥ दवाद्भीतोऽन्यदा ग्रीष्मे, विहाय करिणीर्जवात्। धावमानः सरश्चैकं, पङ्किलं तृपितोऽविशः ॥१२॥ तत्राप्राप्तपयाः पंके, मग्नः प्रत्यर्थिदन्तिना। विद्धः सप्त दिनान्यस्थाः, सहमानो महाव्यथाम् ॥१३॥ आयुर्वर्षशतं विंशत्युत्तरं प्रतिपाल्य च। रक्तो दन्ती चतुर्दन्तो, वन्ध्यभूम्यामभूः पुनः ॥१४॥ मेरुप्रभाभिधः सप्तहस्तिनीशतनायकः। दवं वीक्ष्यान्यदा जातिमस्मार्षीः स्वस्य पूर्विकाम् ॥१५॥ वर्षारात्रादिमध्यान्ते, वल्ल्याद्युन्मूल्य मूलतः। स्थण्डिलं सपरीवारो, व्यधाद्योजनमात्रकम् ॥१६॥ दृष्ट्वाऽन्येद्युर्दवं भीतः, पौरुषं स्वं विमुच्य च। द्रुतं गत्वाऽविशस्तत्र, स्थण्डिले सत्त्वसङ्कुले ॥१७॥ संलीनाङ्गः स्थितस्तत्र,गात्रकण्डूयनेच्छया। उदक्षिपत् पादमेकं, तद्भूम्यां शशकोऽविशत् ॥१८॥ कण्डूयित्वा

वपुः पादं, मुञ्चन्नालोक्य तं शशम्। सशङ्कस्त्वं तथैवास्थाः, शशकस्यानुकम्पया ॥ १९ ॥ सार्द्धदिनद्वयाच्छान्ते, दवे प्रचलिते शशे। त्रुटित्वेव गिरेः कूटं, धरित्र्यामपतः क्षणात् ॥२०॥ ततो दिनत्रयीं क्षुत्तृड्बाधितोऽपि कृपापरः। आयुरब्दशतं क्षिप्त्वा-ऽभूस्त्वमत्र नृपात्मजः ॥२१॥ तदा कृपा कृता तेन, वत्स! स्वच्छात्मना त्वया। तथा स्वस्य व्यथाऽत्यन्तं, नागण्यत मनागपि ॥२२॥ इदानीं तु जगद्विद्वान्, सर्वसावद्यवर्जकः। साधुभिः समचित्तैस्त्वं,घट्टयमानोऽपि दूयसे ॥२३॥ स्वाम्याख्यातमिति श्रुत्वा, स्मृत्वा पूर्वभवौ निजौ। पुनरायातसंवेगो, मेघो नत्वाऽभ्यधात् प्रभुम् ॥२४॥ जीयाच्चिरं यदेवं मामुत्पथप्रस्थितं पथि। पुनः प्रावीवृतः क्षिप्रं, रथ्याविव सुसारथिः ॥२५॥ मुनयोऽमी महात्मानोऽमीषां पादरजोऽपि हि। वन्द्यं मेऽतः प्रभृत्येतद्, व्युत्सृष्टं स्वं शरीरकम् ॥२६॥ मुक्त्वा नेत्रे शरीरेऽत्र,कुर्वतां घट्टनादिकम्। मनसाऽपि न दुष्यामीत्यत्रार्थे मेऽस्त्वभिग्रहः॥२७॥ एवं स्थिरीकृतो मेघस्तप्त्वा तीव्रं तपश्चिरम्। कृत्वा संलेखनां मासं, विजये त्रिदशोऽजनि ॥ २८॥ ततश्च्युत्वा विदेहेषु, लप्स्यते पदमव्ययम्। तदेवं भगवन्तोऽमी, धर्म्मसारथयो मताः ॥२९॥ इति मेघकुमारज्ञातं ॥

(सूत्रं२२) (आश्चर्यदशकं)लोगच्छेरयभूएत्ति उवसग्ग१ गब्भहरणं२ इत्थी तित्थं३ अभाविया परिसा४। कण्हस्स अवरकंका५ अवयरणं चंदसूराणं६ ॥१॥ हरिवंसकुलुप्पत्ती७ चमरुप्पाओ य८ अट्ठसय सिद्धा९। अस्संजयाण पूया१० दसवि अणंतेण कालेण (नीचगोत्रबन्धः) नामगुत्तस्स वा कम्मस्स अक्खीणस्सत्ति,भरतश्चक्री प्राह–आइगरु दसाराणं तिविट्ठुनामेण पोअणाहिवई। पिअमित्तचक्कवट्टी मूआइ विदेहवासंमि ॥१॥ नवि ते पारिव्वज्जं वंदामि अहं इमं च ते जम्मं। जं होहिसि तित्थयरो अपच्छिमो तेण वंदामि ॥२॥ तं वयणं सोऊणं तिवइं अप्फोडिऊण तिक्खुत्तो। अब्भहियजायहरिसो तत्थ मरिई इमं भणइ ॥३॥ जइ वासुदेव

पढमो मूआइ विदेह चक्कवट्टित्तं। चरिमो तित्थयराणं अहो कुलं इत्तियं मज्झ ॥ ४ ॥ अहयं च दसाराणं आइमो (जणओ मे) चक्कवट्टिवंसस्स। अज्जो तित्थयराणं अहो कुलं उत्तमं मज्झ ॥ ५ ॥ पुच्छंताण कहेई उवट्ठिए देइ सामिणो सीसे। गेलन्नेऽपडिअरणं कविला इत्थंपि इहयंपि ॥ ६ ॥ दुब्भासिएण इक्केण मरीई दुक्खसागरं पत्तो। भमिओ कोडाकोडी सागरसरिनामधिज्जाणं ॥ ७ ॥ तंमूलं संसारो नीआगुत्तं च कासि तिवइंमि। अप्पडिकंतो बंभे कविलो अंतद्धिओ कहइ ॥ ८ ॥ जाइकुलरूवबलसुअतवलाभिस्सरियअट्ठमयमत्तो। एयाइं चिय बंधइ असुहाइं बहुं च संसारे ॥ ९ ॥

(सूत्रं३६) तुर्ये लक्ष्मीस्वप्ने 'उच्चागये'त्यत्र हिमवति, यो० १०० उच्चः, १०५२–१२ पृथु,पद्मद्रहो यो० १००० आयामः यो० ५०० पृथुर्वज्रतलः,तन्मध्ये पद्ममेकं जलान्तर्दशयोजननालं तदुपरि २ क्रोशोच्चं यो० १० पृथुलं, तत्परित आभरणभूतपद्मानि १०८, तत्परितः सामानिकपद्मसहस्र४, मह०४ सभ्यसहस्र८–१०–१२ अनीक७ तत्परितोऽङ्गरक्ष० स० १६, तत्परित आभ्यन्तराभियोग ल० ३२ तत्परितो मध्याभियोग ल० ४० तत्परितो बाह्याभियोग० ल० ४८, एवं६ लवयैः सह कमलानि को०१ ल० २० सहस्र ५० शत १२० सङ्ख्यानि।

(सूत्रं६७) (स्वप्नशास्त्राणि)स्वप्नशास्त्रपाठकेषु–एगयओ मिलंतित्ति,न पुनरबद्धाः,राज्ञो मन्त्रिपरीक्षितशय्यैकशाय्यवलगकपञ्चशतीवत्। अणुभूय दिट्ठ चिन्तिय सुय पयइ विआर देवयाणूआ। सुमिणस्स निमित्ताइं पुण्णं पावं च णाभावो ॥१॥ अनूक आद्ये स्मृत आयुपोऽंशे,शेषेऽन्त्यभाग्ये गतिजः प्रदिष्टः। धातुप्रकोपग्रहपाकचिन्तादृष्टाभिचारोद्भवगुह्यकोत्थाः॥२॥ गतैष (त्यैव) जात्यन्तरसत्त्वसङ्गः, स्वप्ने ह्यनूके गतिजे च नित्यं। धातुप्रकोपादनिलेऽधिके स्युः, तर्वद्रितुङ्गांबरलङ्घनानि ॥३॥ पित्तेऽधिके काञ्चनरक्त-

माल्यदिवाकराग्निप्रभृतीनि पश्येत् । श्लेष्माधिकश्चेन्दुमशुक्लपुष्पसरित्सरोम्भोनिधिलङ्घनानि ॥ ४ ॥ जघन्यमध्यप्रथमे निशांशे, प्रावृट्शरन्माधवसंज्ञिते च । काले मरुत्पित्तकफप्रकोपः,साधारणः स्यात् खलु सन्निपातः॥५॥ दशासु प्रोक्तं ग्रहपाकजातं, चिन्तासु दृष्टं च यथा तथैव । बीभत्ससत्त्वाभिभवोऽभिचारो,विश्वोद्भवो गुह्यकजः प्रदिष्टः॥६॥ अनूक्तचिन्तागतिदोषदृष्टा,अभीक्ष्णकर्म्माणि च निष्फलानि । द्युर्दृष्टदीर्घाः कथितास्तु तद्वदनन्यपाकाः कथिता विशेषाः ॥७॥

(सूत्रं९०) "धन्नेणं वड्ढामो" इत्यत्र सालि१ जव२ वीहि३ कंगू४ रालय५ तिल६ मुग्ग७ मास८ चवल९ चणा१०। तुवरि११ मसूर१२ कुलत्था१३ गोधुम१४ निप्फाव१५ अयसि१६ सणा१७ ॥१॥ सप्तदश धान्यनामानि

(सूत्रं९२) 'हडे मे से गब्भे' यदि सत्यमिदं जज्ञे, गर्भस्यास्य कथंचन। तदा नूनमभाग्याऽहं,भूमौ निष्पुण्यकावधिः॥१॥ यद्वा न ह्यभाग्यस्य निकेतने चिन्तारत्नमवतिष्ठते,न हि दरिद्रस्य गृहे निधिः प्रकटीभवति,न हि कल्पपादपो मरौ चिरायावतरति, न हि निष्पुण्यानां पिपासितानाममृतपानेच्छा पूर्यते, हा धिग् दैवं,तदेतत् किञ्चक्रे वक्रेण तेन यत् समूलमुन्मूलितो मन्मनोरथकल्पशाखी,दुःखानि निखातीकरणेन,तदद्य गृहीते दत्त्वाऽपि लोचने,उद्दालितो निधिः प्रदर्श्यापि,पातिताऽहं मेरोः शिखरमारोप्यापि, यद्वा मया किमपराद्धमस्य दैवस्यास्मिन् भवे भवान्तरे वा?, अथवा–किं करोमि? क्व गच्छामि?,कस्याग्रे वा वदाम्यहम्?। दुर्विदग्धेन दैवेन, जग्धा दग्धा च पातकैः ॥ १ ॥ किं चानेन राज्येन ? किं वा सुखेनायतिविमुखेन ? किं वा मङ्गलीकल्पनाकल्पितेन सखीजनजल्पितेन ? किं वा मनःसुखातिरिक्तेन भुक्तेन ? किं वा कल्पितसुखोन्नयनेन दुकूलशय्याशयनेन, तत्तथाविधचतुर्दशस्वप्नसूचितं त्रैलोक्यपूजोचितं निरतिशयानन्तगुणोचितं त्रिभुवनासपत्नं पुत्ररत्नं विना, तदरे दैव! किमुपस्थितोऽसि दुःख-

दावाग्निगहने दहनायैतां निरागसं निराशां मां प्रति, यत्तथाविध १४ स्वप्नलाभलम्भितानन्तसुखप्रकर्षेऽपि अमर्षेण पुनरपकर्षयसि तदनन्तगुणदुःखदानदुर्ललितेनाभिमां, धिग् संसारं असारं, धिग् पर्यन्तदुःखाभिमुखं कामसुखं,अलमनेन मधुलिप्तखड्गधारालेहन-तुलितेन विषयललितेन,किं वा मया पूर्वजन्मसु कृतं सुदुष्कृतं,यत आर्षम्—पसुपक्खिमाणुसाणं बाले जोविहु विओअए पावो। सो अणवच्चो जायइ अह जायइ तो विवज्जिज्जा ॥?॥ तत् किं मया पङ्कुकास्त्यक्ताः त्याजिता वा? किं वा लघुवत्सानां मात्रा वियोगः कृतः कारितो वा? किं वा तेषां दुग्धान्तरायः स्वयं परेण वा विहितः? किं वा सबालकोन्दरबिलानि पूरितानि खानितानि वा, किं वोष्णनीराणि नकुलकोलाबालकाकुलबिलेषु क्षिप्तानि? किं वा कीटिकासाण्डकनिवराणि प्लावितानि तदण्डकानि वा मोचितानि?, किं वा शुकसारिकाहंसकुक्कुटादीनां शिशुभिर्वियोगो दत्तः? किं वा नीडानि साण्डकानि सशिशूनि वा पातितानि? किं वा स्फोटितानि धर्म्मबुद्ध्या काण्डानि? किं वा बालहत्या विहिता? किं सपत्नीपुत्राद्युपरि दुष्टं चिन्तितं कृतं वा?, गर्भ-स्तम्भनशातनपातनानि समाचरितानि?, तन्मन्त्रा वा प्रयुक्ताः?, किं वा शिशवस्त्यक्ता मया त्याजिता वाऽन्यसत्काः? किं वा शप्ता विराद्धेन केनापि ऋषिणा?, अथवा अन्यद्वा किमपि महापापं शीलखण्डनादि समाचरितं यदीदृग्विधानंतदुःखखानिर्वि-हिताऽहं अनेन दुर्दैवेन, तदरे दैव! निर्घृण! निर्दय! निष्करुण! पापिष्ट! दुष्ट! धृष्ट! अशिष्ट! निष्ठुर! क्लिष्टकर्म्मकारक! निरपराधजनमारक! मूर्त्तिमत्पातक विश्वस्तघातक! अकार्यसज्ज! निर्लज्ज! किं मे निष्कारणं वैरी भवसि एवंविधदुःखसागरावतार-णेन? किं वाऽरे दैव! मया तवापराद्धं यन्न निवेदयसि प्रकटीभूय दुष्टानि मच्चेष्टितानि?, किं वाऽन्तर्गडुरिव विडम्बयसि? अलं वाऽलीकैर्दैवोपालम्भैः, किं वा परिदेवितेन?,पर्याप्तं जीवितव्येन,करोमि वा प्राणव्यपरोपणेनैतद्दुःखकाण्डपरिसमाप्तिमित्युन्मनायते,

तच्चिकीर्षुरितस्ततो यूथभ्रष्टमृगीव च बंभ्रमीति, दृष्टा च तथारूपा स्वरूपनिरूपणचतुरेण सखीपरिकरेण, पृष्टा च दौर्मनस्यकारणं, उवाच साश्रुनिःश्वासं–यथा किमरे वदामि मन्दभाग्या ? यज्जगाम मे जीवितं, सख्यो जगुः––सखि ! शान्तममङ्गलं, वर्त्तते गर्भस्य कुशलं ?, सा प्रोचे–हे सख्यो ! गर्भकुशलेऽपि किं परं परिदेवनीयमस्ति तत् ? हा हता हताशेन दैवेन सर्वस्वापहारेणे-त्युक्त्वा भूमौ मूर्च्छिता पतिता, पुनः सखीविहितशीतलोपचारलब्धचैतन्या विलपति, शून्यचित्ता चिरं तिष्ठति, बहु पृष्टा च सगद्गदं गर्भस्वरूपं कथयति, पुनर्मूर्च्छिता भवति, पुनः कृतोपचारा समुत्तिष्ठत्ति, विलपति च, तच्छ्रुत्वा विलपति सखीप्रमुखः सकलोऽपि परिकरः, यथा हा हा किं चक्रे वक्रेण दैवेनास्मत्स्वामिन्याः ? हा हा कुलदेव्यो यूयं क्व गताः यदुदासीनास्तिष्ठथ ? इत्यादि, तथा च कारयन्ति कुलवृद्धा उपयाचितमन्त्रतन्त्रशान्तिकपौष्टिकादीनि शिष्टकार्याणि, पृच्छन्ति च निमित्तज्ञान्, निषेध-यन्ति नाटकादीनि, निराकुर्वन्ति गाढशब्देनापि वचनानि, राजापि जज्ञे सलोकः सशोकः, किंकर्त्तव्यतामूढा मन्त्रिणः, राजभव-नमपि सकलं शून्यमिव शोकस्य राजधानी इव श्रिया त्यक्तमिव दुःखस्य भाण्डागारमिव उद्वेगस्याकर इव सर्वदुःखानां संकर इव विस्मृतभोजनाच्छादनसम्भाषणशयनादिव्यवहारमिव सर्वशोभाविहितपरिहारमिव, किञ्च–तत्र निःश्वासैरेवोत्तरदानं अश्रुपातैरेव मुखधावनं शून्यचित्तोपवेशनैरेव शरीरस्थितिर्वेलातिवाहनं चेत्यादि, तं तथा व्यतिकरमवधिनाऽवधार्य–किं कुर्म्मः ? कस्य वा ब्रूमो ?, मोहस्य गतिरीदृशी। दुपेर्धातोरिवास्माकं,दोपनिष्पत्तये गुणः ॥१॥ इति सञ्चिन्त्य त्रिभुवनगुरुणा श्रीवीरेण किञ्चित् स्पन्दितं,ततः ज्ञातस्वगर्भकुशला अमन्दानन्दपेशलं दध्यौ त्रिशला–कल्याणं मे गर्भस्य, हा धिग्, हा मयाऽज्ञयाऽनुचितं चिन्तितं, किं वाऽकल्पितं विकल्पितं ?, सन्ति मम भाग्यानि, धन्याऽहं, पुण्याऽहं, त्रिभुवनमान्याऽहं, श्लाघ्यं मे जीवितं, कृतार्थं मे जन्म, सुप्रसन्ना मे जिनपादाः,

सञ्जाता मे गोत्रदेवीप्रसादाः,फलितोऽयमाजन्माराधितः श्रीजिनधर्म्मः,प्रकटीभूतं मे प्राचीनं समीचीनं कर्म,प्राप्तं मयाऽद्य मुक्तेरपि शर्म्म,उद्विश्वसितो रोमाञ्चकञ्चुकः प्रोल्लसिते नयने प्रफुल्लं वदनारविन्दं विकसिते कपोलफलके प्रवृत्ताश्च जय जीव नंदेत्याद्याशिषः प्रवर्त्तितानि कुलललनाभिर्धवलानि संस्थापितानि सर्वतोऽप्यष्टौ २ मङ्गलानि प्रदत्ताः कुङ्कमच्छटाः उत्तम्भिताः पताकापटाः संन्यस्ता मौक्तिकस्वस्तिकाः निर्वर्त्तिताः प्रवालनन्द्यावर्त्ताः विकीर्णः पञ्चवर्णः पुष्पप्रकरः वासयति सर्वतोऽपि कर्पूरागरुचन्दनादिपरिमलनिकरः निबद्धानि तोरणानि परिधृतान्याभरणानि प्रणीतानि गीतानि नाटितानि दिव्यनाटकानि सूत्रितानि वादनाय वादित्राणि प्रगुणितानि सधवस्त्रीभिरक्षतपात्राणि पठन्ति बन्दिच्छात्राणि नृत्यन्ति नानापात्राणि पूर्यन्ते प्रमोदेन गात्राणि, राजभवनं च जज्ञे सङ्कीर्णं चतुर्भिरपि वर्णैः पूर्णं वर्द्धापनागतसुवर्णकोटीभिः आकीर्णं च प्रमोदाकुलचेटीभिः सन्निरुद्धसर्वपथं दिव्यरथैः दुर्गमं तुरङ्गमैः दुष्प्रवेशं पत्तिनिवेशैः मूर्त्तिमत्प्रमोदमयमिव सम्प्राप्तसर्वाभ्युदयमिव करकलितसकलसिद्धिकमिव समुद्दीपितचतुर्बुद्धिकमिव लब्धत्रिभुवनमहाराज्यमिव सर्वसम्प्राप्तिप्राज्यमिव, विधीयन्ते स्म हट्टशोभाः,प्रकटयन्ते मञ्चोन्मञ्चे नाटकानि,पोष्यन्ते तूर्यनिर्घोषाः, न श्रूयते लोकानां कोलाहलेन कर्णपतितमपि,प्रयोजिताः जिनप्रासादेषु पूजाः विरचितानि बन्दिमोचनानि प्रकटितः सर्वतोऽमारिपटहः विस्तारिता सुसाधुजनपर्युपास्तिः प्रोत्सर्पितानि साधर्म्मिकवात्सल्यानि व्यक्तीकृता श्रीसङ्घभक्तिः सूत्रितानि सत्त्वेषु महादानानि सम्पादितानि याचकलोकानां मनोरथातिगानि दानानि, सम्पन्नाः कल्पवृक्षा इव राजपुरुषा महादानेन, सुरेन्द्र इव राजा परमैश्वर्येण, सुरलोक इव सर्वलोकः प्रभूतदिव्याभरणादिविभूत्या, गृहे२ महानुत्सवः, सम्पन्नः परमानन्दः ।

(सूत्रं९६) जन्मोत्सवः–आरुग्गा आरुग्गं दारयं पयायन्ति अचेतनाअपि दिशः,प्रसेदुर्मुदिता इव। वायवोऽपि सुखस्पर्शा,

मन्दंमन्दं ववुस्तदा ॥१॥ उद्योतस्त्रिजगत्यासीद्ध्वान दिवि दुन्दुभिः। नारका अप्यमोदन्त,भूरप्युच्छ्वासमासदत् ॥२॥ दिक्कुमार्योऽष्टाधोलोकवासिन्यः कम्पितासनाः। अर्हज्जन्मावधेर्ज्ञात्वाऽभ्येयुस्तत्सूतिवेश्मनि ॥३॥ भोगङ्करा भोगवती,सुभोगा भोगमालिनी । सुवत्सा वत्समित्रा च, पुष्पमाला त्वनिन्दिता ॥ ४ ॥ नत्वा प्रभुं तदम्बां चेशाने सूतिगृहं व्यधुः । संवर्त्तेनाशोधयन् क्ष्मामायोजनमितां गृहात् ॥५॥ मेघङ्करा मेघवती, सुमेघा मेघमालिनी । तोयधारा विचित्रा च, वारिषेणा बलाहका ॥६॥ अष्टोर्ध्वलोकादेत्यैता,नत्वाऽर्हन्तं समातृकम् । तत्र गन्धाम्बुपुष्पौघवर्षं हर्षाद्वितेनिरे ॥७॥ अथ नन्दोत्तरानन्दे, आनन्दा नन्दिवर्द्धनी । विजया वैजयन्ती च, जयन्ती चापराजिता ॥८॥ पूर्वरुचकस्था एता दर्पणकराः। समाहारा सुप्रदत्ता, सुप्रबुद्धा यशोधरा। लक्ष्मीवती शेषवती, चित्रगुप्ता वसुन्धरा ॥९॥ दक्षिणरुचकस्था एताः भृङ्गारपाणयः,इलादेवी सुरादेवी, पृथिवी पद्मवत्यपि। एकनासा नवमिका, भद्रा सितेति नामतः ॥ १० ॥ एताः पश्चिमरुचकस्था व्यंजनपाणयः। अलम्बुसा मितकेशी,पुण्डरीका च वारुणी। हासा सर्वप्रभा ह्रीः श्रीरष्टोदग्रुचकाद्रितः ॥११॥ एताश्चामरपाणयः । चित्रा१ चित्रकनका२, शतारा३ सौदामणी६ तथा । दीपहस्ता विदिक्ष्वेत्याऽस्थुर्विदिग्रुचकाद्रितः॥१२॥ रुचकद्वीपतोऽभ्येयुश्चतस्रो दिक्कुमारिकाः। रूपा रूपासिका चापि,सुरूपा रूपकावती॥१३॥ चतुरङ्गुलतो नालं,छित्त्वा खातोदरेऽक्षिपन्। समापूर्य च वैडूर्यैस्तस्योर्ध्वे पीठमादधुः॥१४॥ बद्ध्वा तद् दूर्वया जन्मगेहाद्रम्भागृहत्रयम् । ताः पूर्वस्यां दक्षिणस्यामुत्तरस्यां व्यधुस्ततः॥१५॥ याम्यरम्भागृहे नीत्वाऽभ्यङ्गं तेनुस्तु तास्तयोः। स्नानचर्चांशुकालङ्कारादि पूर्वगृहे ततः॥१६॥ उत्तरेऽरणिकाष्ठाभ्यामुत्पाद्याग्निं सुचन्दनैः। होमं कृत्वा बबन्धुस्ता, रक्षापोट्टलिका द्वयोः ॥१७॥ पर्वतायुर्भवेत्युक्त्वाऽऽस्फालयन्त्यश्मगोलकौ। जन्मस्थाने च तौ नीत्वा,स्वस्वदिक्षु स्थिता जगुः। १८॥ ततः सिंहासनं शाक्रं,चचालाचलनिश्चलम्।

प्रयुज्याथावधिं ज्ञात्वा, जन्मान्तिमजिनेशितुः ॥ १९ ॥ वज्रयेकयोजनां घण्टां, सुघोषां नैकमैपिणा । अवादयत् ततो घण्टारेणुः सर्वविमानगा ॥२०॥ शक्रादेशं ततः सोच्चैः, सुरेभ्योऽज्ञापयत् स्वयम् । तेन प्रमुदिता देवाश्चलनोपक्रमं व्यधुः ॥ २१ ॥ पालकाख्यामरकृतं, लक्षयोजनसम्मितम् । विमानं पालकं नामाध्यारोहत्रिदशेश्वरः ॥२२॥ पुरतोऽग्रमहिष्योऽष्टौ, वामे सामानिकाः सुराः । दक्षिणे त्रिसभा देवाः, सप्तानीकानि पृष्ठतः ॥२३॥ अन्यैरपि घनैर्देवैर्वृतः सिंहासनस्थितः । गीयमानगुणोऽचालीदपरेऽप्यमरास्ततः ॥२४॥ देवेन्द्रशासनात् केचित्, केचिन्मित्रानुवर्त्तनात् । पत्नीभिः प्रेरिताः केचित्, केचिदात्मीयभावतः ॥२५॥ केऽपि कौतुकतः केऽपि, विस्मयात् केऽपि भक्तितः । चेलुरेवं सुराः सर्वे, विविधैर्वाहनैर्युताः ॥ २६ ॥ विविधैस्तूर्यनिर्घोषैर्घण्टानां क्वणितैरपि । कोलाहलेन देवानां, शब्दाद्वैतं तदाऽजनि ॥ २७ ॥ सिंहस्थो वक्ति हस्तिस्थं, दूरे स्वीयं गजं कुरु । हनिष्यत्यन्यथा नूनं, दुर्द्धरो मम केसरी ॥२८॥ वाजिस्थं केसरारूढो, गरुडस्थो हि सर्पगम् । छागस्थं चित्रकस्थोऽथ, वदन्त्येवं तदादरात् ॥२९॥ सुराणां कोटीकोटीभिर्विमानैर्वाहनैर्घनैः । विस्तीर्णोऽपि नभोमार्गोऽतिसङ्कीर्णोऽभवत्तदा ॥ ३० ॥ मित्रं केऽपि परित्यज्य, दक्षत्त्वेनाग्रतो ययुः । प्रतीक्षस्व क्षणं भ्रातर्मामेत्यपरोऽवदत् ॥ ३१ ॥ केचिद्वदन्ति भो देवाः !, संकीर्णाः पर्ववासराः । भवन्त्येवंविधा नूनं, तस्मान्मौनं विधत्त भोः ॥ ३२ ॥ नभस्यागच्छतां तेषां, शीर्षे चन्द्रकरैः स्थितैः । शोभन्ते निर्जरास्तत्र, सजरा इव निर्जराः ॥ ३३ ॥ मस्तके घटिकाकाराः, कण्ठे ग्रैवेयकोपमाः । स्वेदबिन्दुसमा देहे, सुराणां तारका बभुः ॥३४॥ नन्दीश्वरे विमानानि, संक्षिप्यागात् सुराधिपः । जिनेन्द्रं च जिनाम्बां च, त्रिः प्रादक्षिणयत्ततः ॥ ३५ ॥ वंदित्वा नमसित्वा चेत्येवं देवेश्वरोऽवदत् । नमोऽस्तुते रत्नकुक्षिधारिके ! विश्वदीपिके! ॥३६॥ अहं शक्रोऽस्मि देवेन्द्रः, कल्पादाद्यादिहागमम् ।

प्रभोरन्तिमदेवस्य, करिष्ये जननोत्सवम् ॥३७॥ भेतव्यं देवि ! तत्रैवेत्युक्त्वाऽवस्वापिनीं ददौ। कृत्वा जिनप्रतिबिम्बं, जिनाम्बासन्निधौ न्यधात् ॥३८॥ भगवन्तं तीर्थकरं, गृहीत्वा करसम्पुटे। विचक्रे पञ्चधारूपं, सर्वश्रेयोऽर्थिकः स्वयम ॥३९॥ एको गृहीततीर्थेशः, पार्श्वे द्वौ चात्तचामरौ । एको गृहीतातपत्रः,एको वज्रधरः पुनः ॥ ४०॥ अग्रगः पृष्ठगं स्तौति,पृष्ठस्थोऽप्यग्रगं पुनः। नेत्रे पश्चात् समीहन्ते, केचनाग्रेतनाः सुराः ॥ ४१ ॥ शक्रः सुमेरुशृङ्गस्थं, गत्वाऽथो पण्डकं वनम् । मेरुचूलां दक्षिणेनातिपाण्डुकंवलासने ॥ ४२ ॥ कृत्वोत्सङ्गे जिनं पूर्वाभिमुखोऽसौ निषीदति। समस्ता अपि देवेन्द्राः, स्वामिपादान्तमैयरुः ॥ ४३ ॥ मृन्मणीस्वर्णरूप्यादिनिर्मितैर्योजनाननैः। अष्टोत्तरसहस्रैस्तैः, शुभैः कुम्भैः पृथक् पृथक् ॥ ४४ ॥ क्षीरनीरभृतैर्वक्षःस्थलस्थैस्त्रिदशा बभुः। संसारौघं तरीतुं किं, धृतकुम्भा इव स्फुटम् ? ॥ ४५ ॥ सिञ्चिन्त इव भावद्रुं, क्षिपन्तं वा निजं मलम् । कलशं स्थापयन्तो वा, धर्म्मचैत्ये बभुः सुराः ॥ ४६ ॥ संशयं त्रिदशेशस्य, मत्वा वीरोऽमराचलम् । वामाङ्गुष्ठाग्रसम्पर्कात्, समन्तादप्यचीचलत् ॥ ४७ ॥ कम्पमाने गिरौ तत्र, चकम्पेऽथ वसुन्धरा। शृङ्गाणि सर्वतः पेतुश्चुक्षुभुः सागरा अपि ॥ ४८ ॥ ब्रह्माण्डस्फोटसदृशे, शब्दाद्वैते प्रसर्प्पति। रुष्टः शक्रोऽवधेर्ज्ञात्वा, क्षमयामास तीर्थपम् ॥ ४९ ॥ सङ्ख्यातीताऽर्हतां मध्ये,स्पृष्टः केनापि नाङ्घ्रिणा। मेरुः कम्पमिषादित्यानन्दादिव ननर्त्त सः ॥ ५० ॥ शैलेषु राजता मेऽभूत्, स्नात्रनीराभिषेकतः। तेनामी निर्जरा हाराः, स्वर्णापीडो जिनस्तथा ॥ ५१ ॥ अच्युतेन्द्रस्तत्र पूर्वं, विदधात्यभिषेचनम् । ततोऽनुपरिपाटीतो, यावच्चन्द्रार्यमादयः ॥५२॥ चतुर्वृषभरूपाणि, शक्रः कृत्वा स्वयं ततः। शृङ्गाष्टकक्षरत्क्षीरैरकरोदभिषेचनम् ॥५३॥ सत्यं ते विबुधा देवा, यैरन्तिमजिनेशितुः। सृजद्भिः सलिलैः स्नानं, स्वयं नैर्मल्यमाददे ॥५४॥ समङ्गलप्रदीपं ते, विधायारात्रिकं पुनः। सनृत्यगीतवाद्यादि,व्यधुर्विविधमुत्सवम् ॥५५॥

शक्रोऽथ जिनमानीय, विमुच्याम्बान्तिके ततः । संजहार प्रतिबिम्बावस्वापिन्यौ स्वशक्तितः ॥ ५६ ॥ कुण्डलक्षौमयुग्मं चोच्छीर्षे मुक्त्वा हरिर्व्यधात् । श्रीदामरत्नदामाढ्यमुल्लोचे स्वर्णकन्दुकम् ॥५७॥ द्वात्रिंशद्रत्नरैरूप्यकोटिवृष्टिं विरच्य सः । बाढमाघोषयामासेति सुरैराभियोगिकैः ॥५८॥ स्वामिनःस्वामिमातुश्च, करिष्यत्यशुभं मनः । सप्तधाऽऽर्यमञ्जरीव, शिरस्तस्य स्फुटिष्यति ॥५९॥ चातुर्निकायिका देवा, एवं जन्मोत्सवं प्रभोः । नन्दीश्वरेऽष्टाहिकां च, कृत्वा जग्मुर्यथाऽऽगतम् ॥६०॥ इति श्रीजिनजन्माभिषेकः।

(सूत्रं१०६) नामकरणं 'देवेहिं से नामं कयं'ति अह वड्ढइ सो भयवं दिअलोअचुओ अणोवमसिरीओ । दासीदासपरिवुडो परिकिन्नो पीढमद्देहिं ॥१॥ असिअसिरओ सुनयणो बिंबुट्ठो धवलदंतपंतीओ । वरपउमगब्भगोरो फुल्लुप्पलगंधनीसासो॥२॥ जाईसरो अ भयवं अप्परिवडिएहिं तीहिं नाणेहिं । कंतीहि अ बुद्धीहि अ अब्भहिओ तेहिं मणुएहिं ॥३॥ अह ऊणअट्ठवासो भयवं कीलइ कुमारएहिं समं । आमलिआखिल्लेणं लोअपसिद्धेण पुरबाहिं ॥ ४ ॥ तत्थ य खिड्डे रुक्खं आरुहिअव्वं तु केल्लयनरेहिं । इत्थंतरे अ सक्को सोहम्मसहाइ उवविट्ठो ॥५॥ संतगुणुक्कित्तणयं करेइ वीरस्स अमरमज्झम्मि । धीरत्तगुणविआरे परगुणगहणम्मि तल्लिच्छो ॥६॥ बालो अबालभावो अबालपरक्कमो महावीरो । न हु सक्को भेसेउं देवेहिं सइंदएहिंपि ॥७॥ तं वयणं सोऊणं मिच्छद्दिट्ठी अह सुरो एगो । चिन्तइ माणुसमित्तं तत्थवि सिसुभावमावन्नं ॥८॥ देवेहिंवि नो तीरइ भेसेउं सद्दहामि नो एयं । ता गंतुं भीसेमी इय चिंतिय आगओ तत्थ ॥९॥ कीलइ जत्थ जिणिंदो कीलणरुक्खं च वेढइ समंता । कज्जलवन्नं काउं फणिरूवं दीहरं भीमं ॥१०॥ तं दट्ठूण पलाणा भयभीया कीलमाणया कुमरा । सव्वेवि ठिओ वीरो फणिणावि कओ फणाडोवो ॥११॥ सो घित्तूण करेणं उल्लालेऊण घल्लिओ दूरं । भयरहिएण जिणेणं लहु मिलिया तो पुणो डिंभा ॥१२॥ चिंतइ सुरो न भीओ इत्थं ता अन्नहा पुणो भेसे ।

इत्थंतरम्मि वीरो तेंदूसगकीलणं कुणइ ॥१३॥ तेहिं कुमारेहिं समं सोऽवि सुरो डिंभरूवयं काउं। कीलइ वीरेण समं जिओ य सो भगवया तत्थ ॥१४॥ सो वड्ढिउं पवत्तो वेआलाकारधारओ रुद्दो। सत्ततलमाणदेहो संजाओ भेसणट्ठाए ॥१५॥ जिणनाहेणवि पहओ पुट्ठीए वज्जकढिणमुट्ठीए। सो आराडिं काउं भएण ससगुव्व संकुडिओ ॥ १६ ॥ पायडियामररूवो रंजियहियओ पणमइ जिणिंदं। भणइ तुहं परमेसर! धीरत्तं तारिसं चेव ॥१७॥ जारिसयं सुरवइणा सुरमज्झे वन्निअंति ता खमसु। मज्झ तुमं भेसविओ परिक्खणत्थं जमेवंति ॥ १८ ॥ भुज्जो२ खामिय पणमिअ वीरं गओ स सोहम्मं। भयवंपि गिहे चिट्ठइ विसिट्ठकीलाविणोएणं ॥१९॥ बालत्तणेवि सूरो पगईए गुरुपरक्कमो भयवं। वीरुत्ति कयं नामं सक्केण य तुट्ठचित्तेणं ॥२०॥ आमलकीक्रीडा ॥

मोहेणऽम्मापियरो जाणित्ता अहियअट्ठवासं तु। ण्हायं विलित्तदेहं कयकोउयमंगलं वीरं ॥ २१ ॥ सव्वालंकारधरं सोहणदिवसे कलाण गहणत्थं। कयपूयासक्कारस्स उवज्झायस्स उवणिंति ॥ २ ॥ इत्थंतरम्मि सक्को आसणकंपेण संपउत्तोही। चिंतइ अहो महंतो मोहो सिद्धत्थरायस्स ॥३॥ तिहिं नाणेहिं समग्गो तित्थयरो सव्वसत्थतत्तन्नू। जं उवणिज्जइ पागयजणस्स अचप्पविज्जस्स ॥४॥ विज्जागहणनिमित्तं इअ चिंतिअ आगओ तहिं तुरियं। उवज्झायस्स निमित्तं रइए सिंहासणे पवरे ॥ ५ ॥ तस्सेव य पच्चक्खं वीरकुमारं निवेसइ पहट्ठो। वंदित्तु सत्थलक्खणमह पुच्छइ मउलकरकमलो ॥६॥ भयवंपि वागरेइ जहट्ठिअमसंकियं तयं पुट्ठो। उवज्झाओऽवि पमुइओ निसुणइ परमेण विणएण ॥७। पिच्छ अहो अच्छरिअं बालोऽविहु (सत्थ) पढणरहिओवि। सव्वन्नू इव साहइ जहट्ठिअं सद्दसत्थत्थं ॥ ८ ॥ तुट्ठा अम्मापियरो एवं नाउं विअक्खणं वीरं। सक्कोवि अ सट्ठाणं वंदिय वीरं गओ खिप्पं ॥ ९ ॥ वीरजिणस्स सगासे अवधारिअसद्दलक्खणलवेणं। उवज्झाएण विरइअं वागरणं किर य इंदंति ॥ १० ॥

लेखशालाकरणम् ॥ (सू० १०७) उम्मुक्कबालभावो कमेण अह जुव्वणं समणुपत्तो। भोगसमत्थं नाउं अम्मापिअरो अ वीरस्स ॥१॥
तिहिरिक्खम्मि पसत्थे महंतसामंतकुलपसूयाए। कारिंति पाणिगहणं जसोअवररायकन्नाए ॥ २ ॥ पंचविहे माणुस्से भोए भुत्तूण
सह जसोआए। तेअसिरिं व सुरूवं जणयइ पिअदंसणं धूअं ॥३॥ परिणीया समयम्मि अ जमालिणा पवरनरवइसुएणं। वीर-
स्सऽम्मापियरो दिवं गया इत्थ समयम्मि ॥४॥ वीरस्स जिट्ठभाया अहिसित्तो नंदिवद्धणो कुमरो। वररायलक्खणधरो रज्जे सामंत-
मंतीहिं ॥५॥ वीरोऽवि नंदिवद्धणपमुहं आपुच्छए सयणवग्गं। पव्वज्जागहणत्थं पडिपुन्नभिग्गहत्तेणं ॥६॥ तो भणइ जिट्ठभाया मम
जणणीजणयविरहदुहियस्स। तुह विरहग्गी सुंदर! खयंमि खारोवमो होइ ॥७॥ एवं भणिए जिट्ठेण भाउणा परमपणयकलिएणं।
तस्सेव बोहणत्थं भणइ जिणो भवविरत्तमणो ॥८॥ नणु पिच्छणए पिच्छणयजणाण जह दीहरो न संजोगो। तह बंधुसमाजोगो
अथिरुच्चिअ होइ संसारे ॥९॥ पिअमाइभाइभइणीभज्जापुत्तत्तणेण सव्वेऽवि। जीवा जाया बहुसो जीवस्स उ एगमेगस्स ॥ १० ॥
ता कंमि कंमि कीरइ पडिबंधो? कम्मि कम्मि वा नेअ?। इअ नाऊण महायस! मा किज्जउ सोगसंतावो ॥११॥ नंदि०-अहमवि
जाणामि इमं किंतु ममं बंधणाइं तुट्टंति। जीविअभूएण तए अज्ज विमुक्कस्स सयराहं ॥१२॥ ता मह उवरोहेणं वासाइं दुन्नि चिट्ठसु
गिहम्मि। उत्तमपुरिसा दट्ठुं दुहियं करुणायरा हुंति ॥१३॥ वीर०—एवं होउ नरेसर! किंतु ममट्ठा न कोइ आरंभो। कायव्वोऽहं
फासुअभोयणपाणेण चिट्ठिस्सं ॥१४॥ एवं चिअ पडिवन्ने चिट्ठइ सुहझाणभावणो वीरो। विसयसुहनिप्पिवासो दयावरो सव्वजीवेसु
॥१५॥ एवं प्रतिपन्ने समधिकं वर्षद्वयं प्रासुकैषणीयाहारः शीतोदकमप्यपिबन् भगवान् तस्थौ, न च प्रासुकेनापि जलेन सर्वस्नानं
कृतवान्, केवलं लोकस्थित्या हस्तपादमुखमात्रप्रक्षालनं प्रासुकेन जलेन चकार, निष्क्रमणमहे तु सचित्तोदकेन स्नातवान्, ब्रह्मचर्यं

तु सुविशुद्धं ततः प्रभृति यावज्जीवं परिपालितवान्। इह यदा भगवान् जातः तदा एवं लोके प्रसिद्धिरभूत्—यथा एष चतुर्दश-स्वप्नसूचितो जात इति चक्रवर्ती भविष्यति, तत एनां प्रसिद्धिमाकर्ण्य स्वस्वमातापितृभिः श्रेणिकचण्डप्रद्योतादयः कुमाररूपभगवत्प-र्युपासनाय प्रेषिताः, सम्प्रति तु भगवति घोरानुष्ठानमनुष्ठातुं प्रवृत्ते न एष चक्री भविष्यतीति ते स्वं स्वं स्थानं प्रति गताः ॥

(सू० १०८) 'पुणरवि लोअंतिएहिं देवेहिं'ति,सारस्सयमाइच्चा वण्ही वरुणा य गद्दतोया य। तुसिआ अव्वाबाहा अग्गिच्चा चेव रिट्ठा य॥१॥ संवच्छरेण होहि अभिनिक्खमणं तु जिणवरिंदाणं। तो अत्थसंपयाणं पवत्तए पुव्वसूरम्मि॥२॥ एगा हिरन्नकोडी अट्ठेव अणूणगा सयसहस्सा। सूरोदयमाईअं दिज्जइ जा पायरासी उ॥३॥ वरह वरं वरह वरं आघोसिज्जइ महंतसद्देणं। पुरतिअ-चउक्कचच्चरत्थारायप्पहाईसु॥४॥ जो जं वरेइ तं तस्स दिज्जए हेमवत्थमाईयं। वियरंति तत्थ तिअसा सक्काएसेण सव्वंपि॥५॥ तिन्नेव य कोडिसया अट्ठासीइं च हुंति कोडीओ। असीइं च सयसहस्सा एयं संवच्छरे दिन्नं॥ ६ ॥ तत्तद्वार्षिकदानवर्षविरम-द्दारिद्र्यदावानलाः,सद्यःसज्जितवाजिराजिवसनालङ्कारदुर्लक्ष्यभाः। सम्प्राप्ताः स्वगृहेऽर्थिनः सशपथं प्रत्याययन्तोऽङ्गनाः,स्वामिन्! खिन्नजनैर्निरुद्धहसितैः के यूयमित्यूचिरे॥ ७ ॥ पुट्ठो अ पुणो राया जिणेण वीरेण विगयमोहेण। तुह संतिओ हु अवही पुन्नो गिण्हामि दिक्खमहं॥ ८ ॥ धयहट्टसोहवंदणमालामंचाइमंचरमणिज्जं। कुंडग्गामं नयरं सुरलोयसमं कयं तइआ॥ ९ ॥ सक्केणविय निवेण य उवठविओ पवरकलससंघाओ। तो रन्ना सक्केण य महाविभूईइ यऽहिसित्तो॥१०॥ सुरचंदणाणुलित्तो सुरतरुवर-कुसुममालचिंचइओ। सिअवत्थपाउअंगो जस्स य मुल्लं सयसहस्सं॥११॥ भासुरकिरीडमउलीहारविरायंतपिहुलवच्छयलो। केऊरकडयमंडियभुअदंडो कुंडलाहरणो॥१२॥ पंचासय आयामा धणूण विच्छिन्न पन्नवीसं तु। छत्तीसं उविद्धा सीआ चंदप्पहा

भणिया ॥१३॥ सिबिआए आरोहइ वीरो चंदप्पहाभिहाणाए। मणिरयणकंचणमए निविसइ सिंहासणे तत्थ ॥१४॥ सिंहासणे निसन्नं सक्कीसाणा य दोहिं पासेहिं। वीअंति चामराहिं मणिकणगविचित्तदंडेहिं ॥१५॥ पुव्विं उक्खित्ता माणुसेहिं साहट्टुरोमकूवेहिं। पच्छा वहंति सीअं असुरिंदसुरिंदनागिंदा ॥१६॥ चलचवलभूसणधरा सच्छंदविउव्विआभरणधारी। देविंददाणविंदा वहंति सीअं जिणिंदस्स ॥१७॥ कुसुमाणि पंचवण्णाणि मुअंता दुंदुही अ ताडंता। देवगणा य पहट्ठा समंतओ उत्थुअं गयणं ॥१८॥ वणसंडुव्व कुसुमिअं पउमसरो वा जहा सरयकाले। सोहइ कुसुमभरेणं इअ गयणयलं सुरगणेहिं ॥ १९ ॥ अयसिवणं व कुसुमियं कणियारवणं च चंपगवणं च। तिलयवणं व कुसुमियं इअ०॥ ॥ २०॥ वरपडहभेरिझल्लरिदुंदुहिसंखसहिएहिं तूरेहिं। धरणियल-गयणयले तूरनिनाओ परमरम्मो ॥२१॥ व्यवसायान् व्यापारांश्च, मुक्त्वा द्रष्टुं ययुर्नराः। स्त्रियो निजं निजं कर्म्म, त्यक्त्वाऽगुः कौतुकोत्सुकाः ॥ २२ ॥ श्रुत्वा वाद्यौघनिष्पेषं, स्त्रियोऽभूवन् सुविह्वलाः। चक्रुर्नानाविधाश्चेष्टाः, सर्वेषां विस्मयप्रदाः ॥ २३ ॥

तथा भगवति शिबिकारूढे प्रव्रज्यायै गन्तुं प्रवृत्ते तत्प्रथमतया सर्वात्मना रत्नमयान्यष्टौ मङ्गलकानि पुरतः क्रमेण प्रस्थितानि, तद्यथा—स्वस्तिकः १ श्रीवत्सः २ नन्दावर्त्तः ३ वर्द्धमानकं ४ भद्रासनं ५ कलशः ६ मत्स्ययुग्मं ७ दर्पणश्च ८, तदनन्तरमालोक-दर्शनीयानि क्रमेण पूर्णकलशभृङ्गारचामराणि, ततो गगनतलमनुलिखन्ती वातोद्धूता महन्ती वैजयन्ती, तदनन्तरं विमलवैडूर्य-मणिदण्डं प्रलम्बमानकोरिण्टमाल्यदामोपशोभितं चन्द्रमण्डलनिभं विमलमातपत्रं, तदनन्तरं मणिकनकविचित्रं सपादपीठं सिंहासनं, तदनन्तरमष्टशतमारोहरहितानां वरतुरङ्गमाणां, तदनन्तरमष्टशतं वरकुञ्जराणां, ततोऽनन्तरं अष्टशतं सघण्टानां सपता-कानां सनन्दीघोषाणां अनेकप्रहरणावरणसंभृतानां रथानां, ततोऽष्टशतं वरपुरुषाणां, तदनन्तरं हयानीकं, तदनन्तरं गजानीकं,

ततोऽश्वानीकं, रथानीकं, तदनन्तरमाकाशतलमुल्लिखन् लघुपताकासहस्रपरिमण्डितो योजनसहस्रोच्छ्रयो रत्नमयोऽतिमहान् महेन्द्रध्वजः, तदनन्तरं द्रवः खड्गग्राहाः कुन्तग्राहाः पीठफलकग्राहाः, तदनन्तरं हासकारकाः नर्मकारकाः कान्दर्पिकाः जयजयशब्दं प्रयुञ्जानाः, तदनन्तरं बहव उग्रा भोगा राजन्याः क्षत्रियाः तलवरा माटम्बिकाः कौटुम्बिकाः श्रेष्ठिनः सार्थवाहाः, बहवो देवा देव्यश्च स्वामिनः पुरतः पृष्ठतः पार्श्वतो व्यवस्थिताः संस्थिताः, तदनन्तरं भगवान् शिबिकारूढो गच्छति, भगवतश्च पृष्ठतो हस्तिस्कन्धवरगतः सकोरिण्टमाल्यदाम्ना ध्रियमाणेन छत्रेण श्वेतवरचामराभ्यां वीज्यमानश्चतुरङ्गिन्यासेनया परिकलितो नन्दिवर्द्धनो राजाऽनुगच्छति।

(सू० ११४) 'पंचमुट्ठियं लोयं करेइ'त्ति जिणवरमणुभविचा अंजणघणरुअगविमलसंकासा। केसा खणेण नीआ खीरसरिनामयं उदहिं ॥१॥ काऊण नमुक्कारं सिद्धाणमभिग्गहं तु सो गण्हे। सव्वं मे(पि) अकरणिज्जं पावंति चरित्तमारूढो ॥२॥ एवमागमोक्तविधिना भगवान् प्रव्रजितः। तिहिं नाणेहिं समग्गा तित्थयरा जाव हुंति गिहवासे। पडिवन्नम्मि चरित्ते चउनाणी जाव छउमत्था ॥१॥ 'अणगारियं पव्वइए'त्ति, सकाईआ देवा भगवंतं वंदिउं सपरितोसा। कयनंदीसरजत्ता नियनियठाणाइं संपत्ता ॥२॥ वीरोऽवि बंधुवग्गं आपुच्छिय पत्थिओ विहारेण। सोवि य विसन्नचित्तो वंदिअ वीरं पडिनिअत्तो ॥ ३ ॥

(सू० ११५) दिवसे मुहुत्तसे से कुमारगामं पवरमणुपत्तो। रयणीइ तत्थ सामी पडिमाइ ठिओ अ निकंपो ॥४॥ गोवनिमित्तं सक्कस्स आगमो वागरेइ देविंदो। कुल्लागबहुलछट्ठस्स पारणे पयस वसुधारा ॥५॥ अद्धत्तेरसकोडी उक्कोसा तत्थ होइ वसुहारा। अद्धत्तेरसलक्खा जहन्निआ होइ वसुधरा ॥६॥ देविंदा! न एयं भूअं ३ जन्नं अरिहंता देविंदस्स व असुरिंदस्स व निस्साए केवलनाणं

उप्पाडिंसु ३, सिद्धिं वा वच्चंति, अरिहंता सएण उट्ठाणबलवीरिअपुरसकारपरक्कमेणं केवलनाणं उप्पाडिंसु ३, सिद्धिं वा वच्चंति, मरणान्तोपमर्गस्य वारणार्थं बिडौजसा सिद्धार्थः स्थापितः स्वामिमातृष्वस्रेयो व्यन्तरः, सो भयवं दिव्वेहिं गोसीसाइएहिं चन्दणेहिं चुण्णेहि अ पुप्फेहि अ वासेहि अ वासिअदेहो निक्खमणभिसेएण य अहिसित्तो विसेसेण इंदेहिं चंदणाइगंधेण वासिओ, तस्स पव्वइअस्स चत्तारि साहिए मासे गंधो न फेडिओ, अओ से सुरहिगंधेण भमरा बहवे दूराओवि पुप्फिएवि कुंदाइवणसंडे चइत्ता दिव्वेहिं गंधेहिं आगरसिआ भगवओ देहमागम्म विंधंति, केइ मग्गओ गुमगुमायंता समुल्लिअंति, जया पुण न किंचिवि पाविंति तया आरुसिआ तुण्डेहिं भिंदिऊण तयं खायंति, जे केवि अजिइंदिया तरुणपुरिसा तेऽवि गंधे अग्घाइऊण गंधमुच्छिया भयवंतं भिक्खायरियाए हिंडंतं गामाणुगामं दूइज्जंतं अणुगच्छंता अणुलोमं जायंति–देहि अम्हवि एयं गंधजुत्तिं, तओ भयवंते तुसिणीए अच्छमाणे पडिलोमे उवसग्गे करिंति, तहा इत्थिआओऽवि भयवओ देहं सेअमलरहिअं निस्सासमुगंधमुहं अच्छीणि अ निसग्गेण चेव नीलुप्पलपलासोवमाणि दट्ठुं बहुविहमणुलोममुवसग्गं करिंति, तथापि भगवान् मेरुरिव निष्प्रकम्प एव ।

विहरन्नथ मोराके, सन्निवेशे ययौ प्रभुः। प्राज्यदूइज्जंतकाख्यतापसाश्रमशालिनि ॥१॥ पितुर्मित्रं कुलपतिस्तत्र प्रभुमुपस्थितः। पूर्वाभ्यासात् स्वामिनाऽपि, तस्मिन् बाहुः प्रसारितः ॥ २ ॥ तस्य प्रार्थनया स्वामी, तत्रैकां रात्रिमावसन् । स्थेयं वर्षास्विहेत्यूचे, प्रस्थितं स पुनः प्रभुः ॥ ३॥ नीरागोऽप्युपरोधेन, प्रतिश्रुत्यान्यतो ययौ । अष्टौ मासान् विहृत्याथ, तत्र वर्षार्थमागमत् ॥४॥ कुलपत्यर्पिते वर्षास्तस्थौ स्वामी तृणौकसि । गावो बहिस्तृणानाप्त्या, वर्षारंभे क्षुधातुराः ॥ ५ ॥ अधावन् खादितुं वेगात्तापसानां तृणोटजान्। निष्कृपास्तापसास्ते ताऽताडयन् यष्टिभिभृशम् ॥६॥ ताडितास्तैश्चखादुस्ताः,श्रीवीरालङ्कृतोटजम् । स्थितः प्रतिमया

स्वामी, नाश्नन्तीस्ता न्यषेधयत् ॥७॥ उटजस्वामिना रावाश्चक्रे कुलपतेः पुरः। प्रभुं सोऽप्यशिषन्नीडं, रक्षन्ति न वयोऽपि किम् ? ॥ ८ ॥ अप्रीतिर्मयि सत्येषां, तन्न स्थातुमिहोचितम् । विचिन्त्येति प्रभुः पञ्चाभिग्रहानग्रहीदिमान् ॥९॥ नाप्रीतिमद्गृहे वासः, स्थेयं प्रतिमया सदा २। न गेहिविनयः कार्यो ३,मौनं ४ पाणौ च भोजनम् ॥ १०॥ शुचिराकाचतुर्मास्या, अर्द्धमासादनन्तरम् । प्रावृष्यप्यस्थिकग्रामं, जगाम त्रिजगद्गुरुः ॥ १५ ॥

(सू० ११५) 'चीवरधारी हुत्थ'त्ति,पिउणो मित्तं सोमो आजम्मं चेव निद्धणो भट्टो। धणलाभत्थी पत्तो आयं काउं जिणसगासे ॥१॥ सो पुण दाणावसरे जिणस्स देसंतरे गओ आसि । लाभत्थमेव रडिओ भज्जाए आगओ संतो ॥२॥ एवं जिणेण दिन्नं सवस्स ढणकए तुमं देसि । तो निल्लक्खण ! अज्जवि गंतूण तमेव मग्गेसु ॥ ३ ॥ भणियं च तेण भयवं ! दीणोऽहं दुत्थिओ अभग्गो अ । मग्गंतभमंतस्सवि न किंचि मे सामि ! संपडियं ॥ ४ ॥ किं किं न कयं ? को को न पत्थिओ ? कह कह न नामिअं सीसं ? । दुब्भरउअरस्स कए किं न कयं ? किं न कायवं ? ॥ ५ ॥ दिन्नं च तए दाणं सवस्स जहिच्छियं चिरं कालं। नासि तया इत्थाहं ता सामि ! करेह कारुन्नं ॥ ६ ॥ देसु मह किंचि दाणं सवस्स जयस्स तंसि कारुणिओ । इअ विन्नत्तो भयवं करुणिक्करसोऽणुकंपाए ॥ ७ ॥ वियरइ सुरदूसद्धं अन्नं मह नत्थि किंचि जं भणिउं। सोऽवि गओ पणमित्ता महप्पसाउत्ति तं गहिउं ॥ ८ ॥ तुन्नागस्सुवणीयं दसियाकज्जम्मि तेण सो भणिओ । भमसु जिणमग्गओ तं खंधाओ पडिस्सइ तमद्धं ॥ ९ ॥ नय घिच्छिइ सो भयवं निस्संगो तो तुमं तमाणिज्ज । दोवि अहं तुन्नेस्सं अद्धे सयलं करिस्सामि ॥१०॥ दीणारसयसहस्सं लहिहामो विक्कियंमि तो तुज्झ । मज्झं च अद्धमद्धं होही भणिओ इअ गओ सो ॥११॥ वच्चंतस्स य पडियं खंधाउ सुवन्नवालुआ[नई]पुलिणे।

वत्थं कंटियलग्गं घित्तूण य सो दिओ चलिओ ॥ १२ ॥ मंदाइणीइ पुलिणे चक्कंकुसलंछिए पए दट्ठुं । तित्थंकरस्स पासे पत्तो सामुद्दिओ पुस्सो ॥ १३ ॥ निस्संगं भयवंतं अवलोएउं विसायसंपत्तो । जा निअचित्ते झूरइ दिट्ठीकओ ता सुरिंदेण ॥१४॥ धम्मवरचक्कवट्टी ससुरासुरनरनमंसिओ भयवं । पायरओऽवि हु एयस्स पहरए गरुयदालिद्दं ॥ १५ ॥ इअ भणिऊण सुरिंदो पूयइ धणकणयरयणरासीहिं । सामुद्दियं पहट्ठं जिणोऽवि अन्नत्थ विहरेइ ॥ १६ ॥

(सू० ११५) 'जे केई उवसग्गा उपज्जंति'त्ति स्वामी प्रथमचतुर्मासके शूलपाणियक्षायतने स्थितः, सो पुण दुट्ठसहावो वासं कस्स य न देइ रयणीए। सो पुव्वभवे वसहो आसी धणदेववणियस्स ॥१॥ पंचसए सगडाणं उत्तारेउं नइएँ सो तुट्टो । गामस्स वद्धमाणस्स बाहिं मुत्तुं गओ वणिओ ॥२॥ पाणीचारिणिमित्तं दव्वं गामिल्लयाण दाऊणं । तेहि अ न किंचि दिन्नं तिण्हाइ छुहाइ सो मरिउं ॥३॥ जाओ अ सूलपाणी रुट्ठो उवरिं च तस्स गामस्स । मारिं विउव्विऊणं निवाइओ बहुजणो तेण ॥ ४ ॥ लोगेणं विन्नविओ तव्वयणेणं च देउलं काउं। तप्पडिमा कारविया जत्तं पूअं च कारिंति ॥५॥ तम्मारिअजणअट्ठीनिअरो दीसइ पए पए तत्थ । तो सो अट्ठिअगामुत्ति लोयमज्झम्मि विक्खाओ ॥ ६ ॥ तस्सेव बोहणत्थं भयवं पडिमाए संठिओ रत्तिं । तस्सायणे सुच्चिय दट्ठुं रुट्ठो जिणस्सुवरिं ॥७॥ उवसग्गिउमाढत्तो संझाए कुणइ भूमिभेयकरं। अट्टट्टहाससद्दं मणुयतिरिक्खाण तासणयं ॥ ८ ॥ तत्तो य हत्थिरूवं पिसायरूवं च नागरूवं च । काउं उवसग्गेइ खुहइ मणागंपि नो भयवं ॥९॥ सिरकन्ननासनहअच्छिदंतपिट्ठीसु वेअणं कुणइ । इक्किक्का जा जीवियहरणे अन्नस्स सुसमत्था ॥ १० ॥ तहावि सामी नो मणागंपि सुहझाणाओ खुहिओ, पच्छा सो पडिबुद्धो, सामिणो भत्तिं करेइ ॥

महुराए जिणदासो आभिरविवाह गोण उववासो। भंडीरमित्ते वच्चे भत्ते नागेहि यानमणं ॥१॥ वीरवरस्स भगवओ नावारूढस्स कासि उवसग्गं। मिच्छद्दिट्ठिपरद्धं कंबलसबला समुत्तारे ॥२॥ गामाग बिहेलगजक्ख तावसी उवसमावसाण थुई। छट्ठेण सालिसीसे विसुज्झमाणस्स लोगोही ॥३॥ दढभूमी बहुमिच्छा पेढालुज्जाणमागओ भयवं। पोलासचेइयंमि य ठियेगराइं महापडिमं ॥४॥ सक्को अ देवराया सभागओ भणइ हरिसिओ वयणं। तिन्निवि लोगऽसमत्था जिणवीरमणं चलेउं जे ॥५॥ सामाणियसंगमक्खो देवो सक्कस्स सो अमरिसेणं। अह आगओ तुरंतो मिच्छादिट्ठी पडिनिविट्ठो ॥६॥ धूली१ पिवीलिआओ२ उद्दंसा३ चेव तह य उण्होला४। विच्छुअ५ सप्पा६ नउला७ मूसगा चेच८ अट्ठमया ॥१७॥ हत्थी९ हत्थिणिआओ१० पिसायए११ घोररूव१२ वग्घे अ१३। थेरो१४ थेरी अ१५ तहा वागच्छइ पक्कणो य१७ तहा ॥८॥ खरवाय१८ कलंकलिया१९, कालचक्कं२० तहेव य। पाहाइअउवसग्गे, वीसइमो होइ अणुलोमे ॥९॥ सामाणियदेवड्ढिं देवो दाएइ सो विमाणगओ। भणइ अ वरेहि महरिसि! निप्फत्ती सग्गसुक्खाणं ॥२॥ ओहयमइविभाणो ताहे वीरं बहुं पसाहेउं। ओहीए निज्झायइ वीरो छजीवहिअमेव ॥११॥ छम्माणि गोव कडसलपवेसणं मज्झिमाइ पावाए। खरओ विज्जो सिद्धत्थ वाणिओ नीहरावेइ ॥१२॥

(सू० ११९) 'तेरसमस्स संवच्छर' त्ति नव किर चाउम्मासे छक्किर दोमासिए उवासीय। बारस य मासियाइं बावत्तरि अद्धमासाइं ॥१३॥ एगं किर छम्मासं दो किर तेमासिए उवासीय। अड्ढाइज्जाइं दुवे दो चेव दिवड्ढमासाइं ॥१४॥ भद्दं च महाभद्दं पडिमं तत्तो अ सव्वओभद्दं। दो चत्तारि दसेव य दिवसे ठासी अ अणुबद्धं ॥१५॥ गोयरमभिग्गहजुयं खमणं छम्मासियं च कासीय। पंचदिवसेहिं ऊणं अव्वहिओ वत्थनयरीए ॥१६॥ दस दो य किर महप्पा ठाइ मुणी एगराइयं पडिमं। अट्ठमभत्तेण जई इक्किक्का चरमरा-

ईयं ॥१७॥ दो चेव य छट्ठसए अउणत्तीसे उवासिओ भयवं । न कयाइ निच्चभत्तं चउत्थभत्तं च से आसि ॥ १८ ॥ बारस वासे अहिए छट्ठं भत्तं जहन्नयं आसि । सव्वं च तवोकम्मं अपाणयं आसि वीरस्स ॥१९॥ तिन्नि सए दिवसाणं अउणापन्ने य पारणा-कालो । उक्कुडुअनिसिज्जाणं ठियपडिमाणं सए बहुए ॥२०॥

(सू० १२०) 'जाणमाणे पासमाणे विहरइ' तत्रादिश्य क्षणं धर्म्मं, देवोद्योते जगद्गुरुः। लाभाभावान्मध्यमायां, महसेनवनेऽगमत् ॥१॥ श्रीअपापामहापुर्यां, यज्ञार्थी सोमिलो द्विजः। तदाहूताः समाजग्मुरेकादश द्विजोत्तमाः॥२॥ इन्द्रभूतिः१ अग्निभूतिः२ वायुभूतिः३ व्यक्तः४ सुधर्म्मा५ मण्डितः६ मौर्यपुत्रः७ अकम्पितः८ अचलभ्राता९ मेतार्यः१० प्रभासः११, जीवे१ कम्मे२ तज्जीव३ भूय४ तारिसय५ बंधमुक्खे य ६। देवा७ नेरइया वा८ पुन्ने९ परलोय१० निव्वाणे११ ॥१॥ पंचण्हं पंच सया अद्धुट्ठसया य हुंति दुण्ह गणा। दुण्हं च जुयलयाणं तिसओ तिसओ हवइ गच्छो ॥ २ ॥ एवं चतुश्चत्वारिंशच्छतानि मिलिता द्विजाः। कुर्वन्तिय ज्ञकर्म्माणि, स्वःशर्म्माणि प्रलिप्सवः ॥३॥ तं दिव्वं देवघोसं सोऊणं माहणा तहिं तुट्ठा अहो जन्निएण जुट्ठं देवा किर आगया इहयं ॥४॥ सोऊण कीरमाणिं महिमं देवेहिं जिणवरिंदस्स। अह एइ अहम्माणी अमरिसिओ इंदभूइत्ति ॥५॥ मुत्तूण ममं लोगो किं धावइ एस तस्स पामूलं? । अन्नोऽवि जाणइ मए ठियम्मि कत्तुच्चियं एवं? ॥६॥ वंचिज्ज व मुक्खजणो देवा कहऽणेण विम्हयं नीआ? । वंदंति संथुणंति य जेणं सवन्नबुद्धीए ॥७॥ अहो सुराः कथं भ्रान्तास्तीर्थाम्भ इव वायराः। कमलाकरवद्भेका, मक्षिकाश्चन्दनं यथा ॥ ८ ॥ करभा इव सद्वृक्षान्, क्षीरान्नं शूकरा यथा। अर्कस्यालोकवद् घूकास्त्यक्त्वा यागं प्रयान्ति यत् ॥९॥ युग्मम् ॥ अहवा [पुण] जारिसओ चिअ सो नाणी तारिसा सुरा तेऽवि। अणुसरिसो संजोगो गामनडाणं व

मुक्खाणं ॥१॥ स्वगतं—व्योम्नि सूर्यद्वयं किं स्याद् ?, गुहायां केसरिद्वयम् । खड्गे द्वौ वा प्रतीकारौ, किं सर्वज्ञावहं स च ? ॥२॥ किं त्वैन्द्रजालिकः कोऽपि, कलाशाली विदेशजः । सर्वज्ञाटोपमात्रेण, जनस्वर्गिप्रतारकः॥३॥ सोऽवादीद् भो जनाः कीदृक्, सर्वज्ञोऽसौ निगद्यते ? । जनैरूचे स्वरूपं को, वक्तुं नामास्य शक्नुयात् ?॥४॥ स दध्यौ तर्ह्यसौ नूनं, मायायाः कुलमन्दिरम् । कथं लोकः समस्तोऽपि, विभ्रमे पातितोऽमुना ? ॥५॥ न क्षमे क्षणमात्रं तु, तं सर्वज्ञं कदाचन । तमस्तोममपाकर्त्तुं, सूर्यो नैव प्रतीक्षते ॥६॥ वैश्वानरः करस्पर्शं, मृगेन्द्रः श्वापदस्वनम् । क्षत्रियाश्च रिपुक्षेपं, न सहंते कदाचन ॥ ७ ॥ मया हि येन वादीन्द्रास्तूष्णीं संस्थापिताः समे । गेहेशूरतरः क्वासौ, सर्वज्ञस्तत् पुरो भवेत् ? ॥८॥ शैला येनाग्निना दग्धाः, पुरः के तस्य पादपाः ? । उत्पाटिता गजा येन, का वायोस्तस्य पुम्भिकाः ? ॥९॥ अग्निभूतिरुवाचैवं, भ्रातः! कस्तेऽत्र विक्रमः ?। कीटिकायां कथं पक्षिराट् करोति पराक्रमम् ॥१०॥ पद्मस्योत्पाटने हस्ती, कुठारः काशकर्त्तने । मृगस्य, मारणे सिंहः, सद्भिः किं क्वापि शस्यते ? ॥११॥ गौतमो भ्रातरं प्राह, भो अद्याप्यवतिष्ठते । वाद्यसौ विहिते मुद्गपाके कंकडुको यथा ॥१२॥ पीलयतस्तिलः कश्चिद्दलतश्च कणो यथा । खूडयतस्तृणं किञ्चिदगस्तेः पिबतः सरः ॥१३॥ मर्दयतस्तुषः कोऽपि, तद्वदेष ममाभवत् । तथापि सासहिर्नतु, मुधा सर्वज्ञवादिनम् ॥१४॥ एकस्मिन्नजिते ह्यस्मिन्, सर्वमप्यजितं भवेत् । एकदा हि सती लुप्तशीला स्यादसती सदा ॥१५॥ यतः—छिद्रे स्वल्पेऽपि पोतः किं, पाथोधौ नैव मज्जति ?। न शालो गृह्यते धीरैः,शालांशे पातितेऽपि किम् ?॥ २६॥ हंहो वादिगणा भोटकर्णाटादि समुद्भवाः। कस्माद्दृश्यतां प्राप्ता, यूयं मम पुरः सदा ? ॥२७॥ लाटा दूरगताः प्रवादिनिवहा मौनं श्रिता मालवाः, मूकाभा मगधागता गतमदा जल्पन्ति नो गौर्जराः । काश्मीराः प्रणताः पलायनकरा जातास्तिलङ्गोद्भवा, विश्वे चापि स नास्ति यो हि कुरुते वादं मया साम्प्रतम् ॥ २८ ॥ कृष्ण-

सर्प्पस्य मण्डूकश्चपेटां दातुमुद्यतः । मूषो रदैश्च मार्जारदंष्ट्रापाताय सादरः ॥२९॥ वृषभः स्वर्गजं शृङ्गैः, प्रहर्तुं काङ्क्षति द्रुतम् । द्विपः पर्वतपाताय, दन्ताभ्यां यतते सदा ॥ ३० ॥ शशकः केसरिस्कन्धकेसरान् क्रष्टुमीहते । मद्दृष्टौ यदसौ सर्वविच्वं ख्यापयते जने ॥३१॥ विशेषकम् ॥ समीराभिमुखस्थेन, दावाग्निर्ज्वालितोऽमुना । कपिकच्छूलता देहसुखायालिङ्गिता ननु ॥३२॥ शेषशीर्षमणिं लातुं, हस्तः स्वीयः प्रसारितः । सर्वज्ञाटोपतोऽनेन, यदहं परिकोपितः ॥३३॥ युग्मं ॥ तावद्गर्जति खद्योतस्तावद्गर्जति चन्द्रमाः । उदिते तु सहस्रांशौ, न खद्योतो न चन्द्रमाः॥३४॥ तावद्गजः प्रस्रुतदानगल्लः, करोत्यकालाम्बुदगर्जितानि । यावन्न सिंहस्य गुहास्थलीषु, लाङ्गूलविस्फोटरवं शृणोति ॥३५॥ मम भाग्यभराद् यद्वा, वाद्ययं समुपस्थितः । दुर्भिक्षे क्षुधितस्यान्नलाभश्चिन्तातिगो यथा ॥ ३६ ॥ यमस्य मालवो दूरे, किं स्यात् ? को वा वचस्विनः । अपोपितो रसो नूनं ?, किमजेयं तु चक्रिणः ? ॥ ३८ ॥ सुधियां किममेयं स्यात् ?, किं वाऽसाध्यं तु योगिनाम् ? । क्षुधितस्य न किं खाद्यं ?, न किं वाच्यं खलस्य च ?॥३८॥ कल्पद्रूणामदेयं किं ?, निर्वर्णानां किमत्यजम् ? । गच्छामि तर्हि तस्यान्ते, पश्याम्येतत्पराक्रमम् ॥ ३९ ॥ लक्षणे मम दक्षत्वं, साहित्ये संहता मतिः । तर्के कर्कशता नित्यं, क्व शास्त्रे नास्ति मे श्रमः? ॥४०॥ काउं हयप्पयावं पुरओ देवाण दाणवाणं च । नासेहं नीसेसं खणेण सव्वन्नुवायं से ॥४१॥ इत्युदीर्य त्वरापूर्णो, ययौ वादस्य लिप्सया । पश्चाच्छात्रशतैः पठ्यमानोऽसौ विरुदैरिति ॥४२॥ सरस्वतीकण्ठाभरण १ वादिविजयलक्ष्मीशरण २ ज्ञातसर्वपुराण ३ वादिकदलीकृपाण ४ विज्ञश्रेणिशिरोमणि ५ कुमतान्धकारनभोमणि ६ जितवादिवृन्द७(धारितवादस्कन्ध)८ वादिघटमुद्गर ९ वादिघूकभास्कर१० वादिसमुद्रागस्ति ११ वादिवृक्षहस्ति १२ वादिमुखभञ्जन १३ कुवादिखण्डन १४ वादिसिंहशार्दूल १५ वचोवात्याविक्षिप्तवादितूल १६ पड्भापावल्लिमूल १७परवादिमस्तक-

शूल १८ वादिगोधूमघरट्ट १९ मर्दितवादिमरट्ट२०वादिकन्दकुद्दाल२१ वादिवृन्दभूमीपाल२२ वादिमौनसत्रागार२३ वादिदुर्भिक्षाकार२४ वादिगजसिंह२५ वादीश्वरलीह२६ वादिहृदयसालु२७ वादियुद्धमालु२८ वादिमदज्वरधन्वन्तरि२९ वादिहरिणहरि ३० वादिवेश्याभुजङ्ग ३१ शब्दलहरीगङ्गातरङ्ग ३२ सरस्वतीभण्डार३३ चऊदविद्याअलङ्कार ३४ षड्दर्शनपशुग्रामगोपाल३५ कलारञ्जितानेकभूपाल३६ सर्वशास्त्राधार३७ वहोत्तरिकलाभर्त्तार३८ वहुराजसमाजमुकुट३९ वहुबुद्धिविकट४० ज्ञानरत्नरत्नाकर ४१ महाकवीश्वर४२ शिष्यीकृतवृहस्पति ४३ निर्जितशुक्रमति ४४ कूर्चालसरस्वती ४५ प्रत्यक्षभारती४६ जितानेकवाद ४७ सरस्वतीलब्धप्रसाद४८ इत्यादीनि, वीरं निरीक्ष्य सोपानस्थितो दध्यौ स विस्मितः। किं ब्रह्मा शङ्करः किं वा, किं विष्णुर्ब्रह्म वा किमु ? ॥४३॥ चन्द्रः किं ? स न यत् कलङ्करहितः सूर्योऽथवा ? नो स यत्, तीक्ष्णांशुः किमु वासवो ? न स सहस्राक्षो यतो गीयते। किं वा स्वर्णगिरि ? न सोऽतिकठिनः ख्यातः सुरद्रु ? नैवा, नो स्याच्चिन्तितमात्रदः सहि जने हुं वर्द्धमानो ह्यमौ ॥४४॥ आदित्यमिव दुष्प्रेक्ष्यं, समुद्रमिव दुस्तरम्। बीजाक्षरमिवातर्क्यं, महावीरं नमो दयेम् (स दृष्टवान्) ॥४५॥ कथं मया महत्त्वं हा, रक्षणीयं पुरार्जितम्। प्रासादं कीलिकाहेतोर्भंक्तुं को नाम वाञ्छति ? ॥४६॥ सूत्रार्थी पुरुषो हारं, कस्त्रोटयितुमीहते ?। कः कामकलशं शस्यं, स्फोटयेद्वीकिरे(च्छर्करा)कृते ?॥४७॥ भसने चन्दनं को, वा दहेद् दुष्प्रापमप्यथ? । लोहार्थी को महाम्भोधौ, नौभङ्गं कर्तुमिच्छति ?॥४८॥ हे इंदभूइ ! गोयम सागयमुत्ते जिणेण चिंतेइ। नामंपि मे वियाणइ अहवा को मं न याणेइ ? ॥४९॥ स्वागते पृच्छिते दध्यौ, मिष्टैर्वाक्यैः कथं प्रिये ?। कपित्थं तत्र यच्छीघ्रं, वातेन पतति द्रुमात् ॥५०॥ जइवा हिययगमं मे संसयमुन्निज्ज अहव छिंदिज्जा। तो हुज्ज विम्हओ मे इअ चिंतंतो पुणो भणिओ ॥५१॥ किं मन्नि अत्थि जीवो उआहु नत्थित्ति संसओ तुज्झ।

वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥५२॥ समुद्रो मथ्यमानः किं ?, गङ्गापूरोऽथवा किमु ?। आदिब्रह्मध्वनिः किं वा ?, वीरवेदध्वनिर्बभौ ॥५३॥ वेदपदानि, 'स वै अयमात्मा ज्ञानमय' इत्यादि, तथा 'ददद' 'दमो दानं दया' इति दकारत्रयं यो वेत्ति स जीवः, उताहो नास्ति, 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविश्यति, न प्रेत्यसंज्ञाऽस्ति' इत्यादि, विद्यमानभोक्तृकमिदं शरीरं भोग्यत्वादोदनादिवत्, अतोऽस्ति जीवः १, श्रीवीरमुखतो वेदपदार्थमवगत्य च। प्रव्रज्य स क्रमात् प्राप, परमानन्दसम्पदम् ॥५४॥ तं पव्वइयं सोउं बीओ आगच्छई अमरिसेणं। वच्चामि णमाणेमी पराजिणित्ताण तं समणं ॥५५॥ छलिओ छलाइणा सो मन्ने माइंदजालिओ वावि। को जाणइ कह वत्तं इत्ताहे वट्टमाणीं से ? ॥५६॥ सो पक्खंतरमेगंपि जायइ जइ मे तओ मि तस्सेव। सीसत्तं हुज्ज गओ वुत्तुं पत्तो जिणसगासं ॥ ५७ ॥ आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं। नामेण य गुत्तेण य सव्वन्नूसव्वदरिसीणं ॥ ५८ ॥ हे अग्गिभूइ गोअम साग०, जइ वा हियगयं मे०, किं मन्नि अत्थि कम्मं०, 'पुण्यः पुण्येन कर्म्मणा, पापः पापेन कर्म्मणा' इत्यादि, उताहो नास्ति, 'पुरुष एवेदं ग्निं सर्वं यद्भूतं यच्च भाव्यं उतामृतत्वस्येशानो यदन्नेनातिरोहति यदेजति यन्नैजति यद् दूरे यदु अन्तिके यदन्तरस्य सर्वस्य यदु सर्वस्यास्य बाह्यत इति, शरीरान्तरपूर्वकं बालशरीरं इन्द्रियादिमत्त्वाद् युवशरीरवत्, एवं कर्म्मसत्ता स्फुटैव २। एवं जिनमुखाच्छ्रुत्वा, वेदार्थं द्वितीयादयः। द्विजोत्तमाः परिव्रज्य, सम्प्रापुः परमं पदम् ॥ ५९ ॥ एवं ४४०० द्विजाः प्रव्रजिताः, ११ गणधराणां त्रिपद्या १४ पूर्वरचना गणधरपदप्रतिष्ठा च। इति गणधरवादः सम्पूर्णः ॥

(सू० १२६) 'जिट्ठस्स गोयमस्स'त्ति श्रीगौतमोऽप्रतिमरूपकान्तिसौभाग्यगजगतिप्रथमसंहननसंस्थानषष्ठादितपःक्षा-

न्त्यादियतिधर्म्मतेजोलेश्यामर्षौषध्यादिसर्वलब्धिमत्यादिचतुर्ज्ञानसमस्तद्वादशाङ्गधारकसङ्ख्यातीतपृच्छकभवकथनप्रभृतिसर्वगुणैः सम्पूर्णः। केवलज्ञानिना स स्वनिर्वाणसमये देवशर्मणः प्रतिबोधनाय क्वापि ग्रामे स्वामिना प्रेषितः, तं प्रतिबोध्य पश्चादागच्छन् श्रीवीरनिर्वाणं श्रुत्वा वज्राहत इव शून्यः क्षणं तस्थौ, बभाण च–पसरइ मिच्छत्ततमं गज्जंति कुतित्थिकोसिआ अज्ज। दुब्भिक्खडमरवेराई निसिअरा हुंति सप्पसरा ॥१॥ अत्थमिए जयसूरे मउलेइ तुमम्मि संघकमलवणं। उल्लसइ कुमयतारानिअरोऽविहु अज्ज जिण वीर! ॥२॥ तमगसिअससिं व नहं विज्झायपईवयं व निसि भवणं। भरहमिणं गयसोहं जायमणाहं व पहु! अज्ज ॥ ३ ॥ तथा हा हा! वीर! किं कृतं? यदीदृशेऽवसरेऽहं दूरीकृतः, किमहं मांडकं मण्डयित्वा बाल इव तव वस्त्राञ्चलेऽलगिष्यं? किं केवलभागममार्गयिष्यं? किं त्वयि कृत्रिममना अभवं? किं मुक्तौ सङ्कीर्णं? किं तव रणरणककारकोऽभवं? किं वा तव भारोऽभूवं? हा वीर! कथं विसारितोऽहं? कस्याग्रे सन्देहान् प्रक्ष्ये?, हा वीर! विरहं कुर्वाणेन महान् विरामः कृतः, कस्याग्रे कथयामि? "वीर वीर" इति, वी वी मे लग्नाऽभवत्, हुं हुं ज्ञातं–वीतरागा अस्नेहा भवन्ति, धिग् मां येन निर्वाणविषये श्रुतोपयोगोऽपि न ददे, धिग्मामेकपाक्षिकस्नेहं, अलं स्नेहेन, एकोऽस्मि, नास्ति कश्चन मम, एवं सम्यक् साम्यभावापन्नस्य केवलमुत्पेदे। मुक्खमग्गपवन्नाणं सिणेहो वज्जसंखला। वीरे जीवंतए जाओ गोयमो जं न केवली ॥१॥ प्रातरिन्द्राद्यैर्महिमा कृतः, सर्वेषां प्रमोदः सम्पन्नः॥ श्रीवीरवृत्तं ॥

(सू० १५४) 'पासे नामेणं' ति, धात्रीभिरिन्द्रादिष्टाभिर्लाल्यमानो जगत्पतिः। नवहस्तप्रमाणाङ्गः, क्रमादाप च यौवनम् ॥१॥ तादृग्रूपं प्रभुं दृष्ट्वा, चिन्तयामासुरङ्गनाः। यासां पतिरयं भावी, धन्यास्ता एव भूतले ॥२॥ कुशस्थलपुरस्वामी, प्रसेनजिन्महीपतिः। स्वकन्यां स्फीतलावण्यरूपां लात्वा समाययौ ॥ ३ ॥ अश्वसेनोऽप्युवाचैवं, कुमारः पार्श्व एष नः। सदा विरक्तः संसारान्

जाने किं करिष्यति ? ॥४॥ परं तवोपरोधेन, पार्श्वनाथं बलादपि । विवाहं कारयिष्याम्यनिच्छन्तमपि वाल्यतः ॥ ५ ॥ इत्युक्त्वा सह तेनैव, पार्श्वपार्श्वं गतो नृपः । इमां प्रसेनजित्पुत्रीमुद्वहेति जगाद च ॥ ६ ॥ श्रीपार्श्वोऽप्यब्रवीत् तात !, कलत्रादिपरिग्रहः । अपि प्रक्षीणपापस्य, जीवातुर्भवशाखिनः ॥ ७ ॥ पुनः पितृवचः पार्श्वोऽप्युल्लङ्घयितुमक्षमः । भोग्यकर्म्म क्षपयितुमुदुवाह प्रभावतीम् ॥८॥ अधिप्रासादमन्येद्युः, स्वामी वातायनस्थितः । पुरीं वाणारसीं द्रष्टुं, प्रावर्तत कुतूहलात् ॥ ९ ॥ बहिश्च निर्यतः पुष्पोपहारपटलीकृतः । ससंभ्रमान्नागरांश्च, नागरीश्चैक्षत प्रभुः ॥१०॥ तत्स्वरूपं कोऽप्याहैवं–सन्निवेशे क्वचिदभूत्, रोरे द्विजकुले सुतः । कृपया जीवितो लोकैः, कठ इत्युदितश्च तैः ॥ ११ ॥ अन्येद्युरीश्वरान् पश्यन्, रत्नालङ्कारधारिणः। देवा इवामी तन्मन्ये, प्राग्जन्मतपसः फलम् ॥१२॥ एवं विचिन्त्य संवेगादग्रहीत्तापसव्रतम् । पञ्चाग्न्यादि तपस्तेपे, कन्दमूलादिभोजनः ॥१३॥ सोऽयं नाथ ! तपस्व्यद्य,बहिः पुर्या इहागतः । पञ्चाग्न्यादितपास्तं चार्चितुं पौरा व्रजन्त्यमी ॥१४॥ तद्द्रष्टुं कौतुकं स्वामी,जगाम सपरिच्छदः । ज्ञानत्रयधरोऽपश्यद्दह्यमानं महोरगम् ॥१५॥ तद्दृष्ट्वा करुणाम्भोधिर्भगवानभ्यधादिदम् । अहो अज्ञानमज्ञानं,न दया यत् तपस्यपि ॥१६॥ कृपानदीमहातीरे,सर्वे धर्म्मास्तृणाङ्कुराः। तस्यां शोषमुपेतायां,कियन्नन्दन्ति ते पुनः? ॥१७॥ अहो तपस्विन्नतिमूढतैव ते, धर्म्मस्य तत्त्वं न हि वेत्सि सर्वथा । इत्थं महारम्भरतो निरन्तरं, कष्टं वृथा किं कुरुषे दयां विना ? ॥१८॥ तदाकर्ण्य कठोऽवोचद्राजपुत्रा हि जानते । गजाश्वाद्येव धर्म्मं तु, वयमेव तपोधनाः ॥ १९ ॥ काष्ठकुण्डादथाकृष्टे, कुठारेण द्विधाकृते । सहसा निर्जगामोच्चैः, पन्नगस्तापविह्वलः ॥२०॥ तस्य दंदह्यमानस्य, महाऽहेर्भगवानपि । अदापयन्नमस्कारान्, प्रत्याख्यानं च तत्क्षणम् ॥२१॥ नमस्कारप्रभावेण, स्वामिनो दर्शनेन वा । विपद्य धरणो नाम, नागराजो बभूव सः ॥ २२ ॥ अहो ज्ञानमतिरेवं, स्तुतः

स्वामी गृहं ययौ। विशेषात् तापसः क्रुद्धो, ज्ञानं मिथ्यादृशां कुतः? ॥२३॥ मृत्वा मेघकुमारेषु, कठो भवनवासिषु। असुरो मेघमालीति, नामतः समजायत ॥ २४ ॥

(सू० १५८) 'जे केई उवसग्गा'०॥ द्वितीयेऽह्नि प्रभुः कोपकटाख्ये सन्निवेशने। अपारयत् पायसेन, धन्यस्य गृहिणो गृहे ॥१॥ विहरन्नेकदा स्वामी, नगरासन्नवर्त्तिनम्। तापसाश्रममायातो, ययौ चास्तं दिवाकरः ॥२॥ तत्रोपकूपं न्यग्रोधतरुमूले जगद्गुरुः। तत्पाद इव निष्कम्पस्तस्थौ प्रतिमया निशि ॥३॥ ततः पार्श्वमुपद्रोतुं, भेत्तुमद्रिमिव द्विपः। अमर्षान्धः समायातो, मेघमाली सुराधमः ॥४॥ विकृतास्तेन वैतालाः, शार्दूला वृश्चिका द्विपाः। नाचालीत्तैरपि ध्यानात्, मर्यादाया इवोदधिः ॥५॥ विशेषेण ततः क्रुद्धो, मेघमाली सुरः स्वयम्। विचक्रे गगने मेघान्, कालरात्रिसहोदरान् ॥ ६ ॥ प्रारेभे वर्षितुं मेघमाली कल्पान्तमेघवत्। ब्रह्माण्डं स्फोटयन्तीव, विद्युच्च व्यानशे दिशः ॥ ७ ॥ क्षणादाकण्ठमम्भोऽभूत्, श्रीपार्श्वस्वामिनस्तदा। नासाग्रन्यस्तदृग्ध्यानात्, मनागपि चचाल न ॥८॥ आनासाग्रं यावदम्भः, श्रीपार्श्वस्वामिनोऽभवत्। धरणस्योरगेन्द्रस्यासनं तावदकम्पत ॥९॥ महिषीभिस्ततः सार्कं, नागराजः समाययौ। नत्वा चक्रे प्रभुं शीर्षे, फणानथ प्रभूपरि ॥१०॥ तन्महिष्योऽपि नाथाग्रे, वेणुवीणादिबन्धुरम्। विदधुर्गीतनृत्यादि, भक्तिभावितचेतसः ॥ ११ ॥ ज्ञात्वाऽवधेरमर्षेण, वर्षन्तं मेघमालिनम्। निरीक्ष्य कुपितो नागराजः साक्षेपमब्रवीत् ॥१२॥ अरे! किमिदमारब्धमात्मानर्थाय दुर्मते!। कृपालोरपि भृत्योऽहं, सहिष्येऽतः परं न हि ॥१३॥ प्रभोः सदुपदेशोऽपि, तव वैरायते तदा। लवणायोषरवत्यां, वारि वारिमुचामिव ॥१४॥ मेघमाली ततो भीतः, प्रभुं शरणमाश्रितः। प्रणम्य स्वामिनं सर्वेऽप्यगुः स्थानं निजं निजम् ॥ १५ ॥ श्रीपार्श्ववृत्तम् ॥

(सू० १७२) 'अरिट्ठनेमी नामेणं'ति ॥ वत्स! त्वं कुरु-नः प्रमोदविधये वीवाहमेवं यदा, प्रोक्तः श्रीशिवयाऽम्बया जिन! ततोऽवादीस्त्वमेवं तदा । योग्यामम्ब! कनीमहं ननु यदा लप्स्ये वरिष्ये तदेत्युक्त्वाऽऽमोदि यदम्बिका गुरुतरं तत्ते गुरुत्वं गुरोः ॥१॥ चक्रं येन सुखं कुलालवदहोऽङ्गुल्या भृशं भ्रामितं, सारङ्गं च धनुर्मृणालवदलं येन स्वयं नामितम् । विष्णोरप्यसमभ्रमकरी कौमोदकी यष्टिवद्, येनोत्पाट्य निजे महाभुजतरौ शाखाश्रियं प्रापिता ॥ २ ॥ विष्णोः शङ्खवरेऽरविन्ददवदलं येन स्वयं पूरिते, स्तम्भोन्मूलमनेकपा हयवरा उद्बन्धनास्त्रेसिरे । विश्वं श्राग् बधिरं धरापि विधुरा वप्रश्चकम्पेऽधिकं, पेतुस्ते मृतका इवाभवदलं शङ्का सबन्धौ हरौ ॥३॥ संचेलुः शैलनाथा विचलितनिलया भीतभीताः सुरेन्द्राः, संत्रेसुर्दिक्करीन्द्रा भ्रमणपरिगतैर्मूर्च्छितं यादवेन्द्रैः । ब्रह्माण्डं खंडखडैः स्फुटितमुदधिभिः प्लावितं भूमिपीठं,यस्येत्थं शङ्खचापाक्रमणविलसिते सोऽस्तु नेमिः शिवाय ॥४॥ कृष्णेन स्वबला-वलोकनकृते बाहुं तिरो निर्मितं, प्रोद्दण्डं निजलीलयाऽप्यनमयस्त्वं नालनामं तदा । त्वद्बाहुं नमयन्नयं पुनरभूत् पादोज्झितोर्वीतलः, शाखालम्बिकपीशवत् स जयतात् त्वं विश्वविश्वाद्भुतः ॥५॥ वसन्ते विविधाः क्रीडा; गोपिकागणमध्यगः । चकार सविकारश्च, नाभवद्भुवनाद्भुतः ॥६॥ गोपिकानां वचोयुक्त्या, यदूनामाग्रहादपि । पाणिग्रहमहं मेने, दाक्षिण्यान्निःस्पृहोऽपि हि ॥७॥ श्रीसमुद्र-विजयादिनैकनरेन्द्रोपशोभमानः श्रीशिवादेवीप्रमुखप्रमदाजनेन गीयमानो जनमनआनन्दनिर्मितछत्रधारः रथस्थो धृतातपत्रः पाणि-ग्रहणाय व्रजन्नग्रतो वीक्ष्य सारथिं प्रति कस्येदं कृतमङ्गलभरं धवलमन्दिरं ?, सोऽङ्गुल्याऽदर्शयत्—उग्रसेननृपस्यायं, प्रासादः श्वशुरस्य ते । यद्गवाक्षस्थिते तन्व्यौ,पश्यतस्त्वां सितानने ॥१॥ मृगलोचना नेमिमालोक्य सानन्दं—सहि! चंदाणणे २-एक्कच्चिय राइमई विलयावग्गंमि वन्नणिज्जगुणा । जीसे नेमि करिस्सइ लायन्ननिही करग्गहणं ॥२॥ चंदाणणा आह—मिअलोअणे!—राइमईए

रूवं विही विनिम्मविय रंभरूवहरं । न करिज्ज दइअमिअसं हविज्ज ता नूणमजसभरं ॥ ४ ॥ चंदाणणा पश्चाद्विलोक्य सौत्सुक्यं मृगलोचने ! आइहरड्डिआ-मंगलतूरमाइन्निऊण दइअदंसणुकंठिया पिअसही राइमई इहागया, राजीमती साभिलापं-सहीओ ! इमस्स कस्स य महूसवस्स दंसणदाणेण मज्झवि अणुग्गहं करेह, सख्यौ-जइ किंपि पारिओसिअं देसि, राजीमती बलात्तदन्तरे स्थित्वा नेमिमवलोक्य साश्चर्यमात्मगतं-किं पायालकुमारो ? किं वा मयरद्धओ ? अह सुरिंदो ? । मह चेव मुत्तिमंतो अह एसो पुन्नपब्भारो ? ॥१॥ किं तस्स करोमि अहं अप्पाणंविहु निउंछणं विहिणो । निरुवमसोहग्गनिही एस पई जेण मह विहिओ ॥५॥ चंदाणणा सहासं-मिअलोअणे ! पिच्छ पिच्छ-अवरं जणं न पिच्छइ इमम्मि दिट्ठेवि पिअसही अहुणा । परिणीया एएणं ओलक्खिस्सइ न उण अम्हे ॥६॥ मृगलोचना-उवलक्खउ मा एसा इत्तियमित्तेण अम्ह परितोसो । जइ एस पिअसहीए पाणिग्गहणं कुणइ नेमी ॥७॥ अथ पशूनामार्त्तस्वरं श्रुत्वा नेमीः सोत्कण्ठं-हंहो दारुक ! श्रवणदारुणः कोऽयं दारुणः स्वरः?-स्वजनस्य तवोद्वाहे, गौरवं कर्तुमामिषैः । अत्रैते मीलिताः सन्ति, भीरवः पशवः प्रभो ! ॥८॥ नेमिरात्मगतं-अहह श्रोतुमशक्यं चरित्रमपवित्रचित्तवृत्तीनाम् । ये कुर्वन्ति निजोत्सवमनुत्सवैरपरजन्तूनाम् ॥९॥ राजीमती-हद्धी सहीओ ! किं निमित्तं मे वामं चक्खु परिप्फुरइ ?, सख्यौ-पडिहयममंगलं, थुथुकारं कुर्वतः, नेमिः-सारथे ! रथमित एवाभिवर्त्तय, तावता तत्रैको हरिणो नेमिं पश्यन् स्वग्रीवया हरिणीग्रीवां पिधाय सभयौत्सुक्यं ब्रूते-मा पहरसु मा पहरसु एअं मह हियहारिणिं हरिणिं । सामी ! अम्हं मरणावि दुस्सहो पियतमाविरहो ॥ १ ॥ हरिणी नेमिमुखं निर्वर्ण्य हरिणं प्रति-एसो पसन्नवयणो तिहुयणसामी अकारणे बंधू । ता विण्णवेसु वल्लह ! रक्खत्थं सव्वजीवाणं ॥२॥ हरिणः स्वमुखमूर्ध्वीकृत्य-निझरणनीरपाणं अरण्णतिणभक्खणं च वणवासो । अम्हाण निरवराहाण जीवियं

रक्ख रक्ख पहो !॥१॥ इति सर्वेऽपि पशवः कुर्वन्ति, नेमिः पशूनां प्राहरिकान् प्रति—भवत्स्वामी ममोद्वाहे, तावदेतान् हनिष्यति। तन्नैवाहं करिष्ये तन्, मृगान् मुञ्चत मुञ्चत ॥१॥ प्राहरिकास्तथा कुर्वन्ति, नेमिः सारथिं प्रति—पशूनां रुधिरैः सिक्तो, यो दत्ते दुर्गतिं फलम्। विवाहविषवृक्षेण, कार्यं मे नामुनाऽधुना ॥१४॥ सारथिर्देवादेशः प्रमाणमिति तथाऽकरोत्, राजा समुद्रविजयः शिवा देवी च तत्क्षणम्। स्थित्वाऽग्रे स्वजनैः साकं, शीघ्रं स्खलति तद्रथम् ॥१६॥ राजीमती—हा दिव ! किमुवट्ठिअंति मूर्च्छति, सख्यौ चन्दनद्रवैरभिषिञ्चतः, राजीमती आश्वस्य सबाष्पमुच्चैःस्वरं—हा जायवकुलदिणयर ! हा निरुवमनाण ! हा जगस्सरणं ! । हा करुणायर ! सामी मं मुत्तूणं कहिं चलिओ ? ॥ १ ॥ शिवा देवी बाष्पाण्यवधूय सगद्गदं—पत्थेमि जणणिवच्छल ! वच्छ ! तुमं पढमपत्थणं किंपि। काऊण पाणिगहणं मह दंसे निअवहूवयणं ॥२॥ चन्द्रा० आकण्णय कण्णरसायणं जणणिभणियस्स पडिवयणं, राजी—सावहाणा म्हि, नेमिः—मुञ्चाग्रहमिमं मातर्मानुषीषु न मे मनः। मुक्तिस्त्रीसङ्गमोत्कण्ठमुत्कण्ठमिव तिष्ठते ॥ १ ॥ राजी—दीर्घं निःश्वस्य—सुअं ताव सोअव्वं—हा हियय ! धिट्ठ निट्ठुर अज्जवि निल्लज्ज ! जीवियं वहसि। अन्नत्थ बद्धराओ जइ नाहो अत्तणो जाओ ॥१॥ इति, मूर्च्छति, पुनर्निःश्वस्योपालम्भगर्भम्—जइ सयलसिद्धभुत्ताइ धुत्त ! रत्तो सि मुत्तिगणियाए। तो एवं परिणयणारंभेण विडंबिया किमहं ? ॥१॥ सख्यौ सरोपं—पिम्मरहियम्मि पियसहि ! एयंमिवि किं करेसि पियभावं ?। पिम्मपरं कंपि वरं अन्नयरं ते करिस्सामो ॥ २ ॥ राजी—कराभ्यां कर्णौ पिधाय—सहि ! इअमं असोअव्वं तुमंपि जंपेसि—जइ कहवि पच्छिमाए उदयं पावेइ दिणयरो तहवि। मुत्तूण नेमिनाहं करेमि नाहं वरं अन्नं ॥३॥ जइविहु एयस्स करे मज्झ करो नासि (सहिउ) परिणयणे। तहवि सिरे मह सुच्चिय दिक्खासमए करो होही ॥४॥ चंदा०—साहु पियसहि ! साहु, सुलद्धं जंमु, तह हवउ तिहुयणरज्जाओवि हु दुल्लहं,

सइत्ति संकित्तणं इति, निजोत्तरीयाञ्चलमुत्तारयसि, राजी–सहीओ न सकुणोमि इत्थ बहुजणे चिट्ठिउं, इय धवलहरं पविसइ, समुद्रविजयः–वत्स ! पूरयास्मन्मनोरथान्, नाभेयाद्याः कृतोद्वाहा, मुक्तिं जग्मुर्जिनेश्वराः। ततोऽप्युच्चैः पदं ते स्यात्, कुमारब्रह्मचारिणः ? ॥ १ ॥ नेमिः–क्षीणभोगफलकर्म्माऽहं, किञ्च–एकस्त्रीसङ्ग्रहेऽनन्तजन्तुसन्तानघातके । भवतां भवतांतेऽस्मिन्, विवाहे कोऽयमाग्रहः ? ॥ १ ॥ ततो जय निर्जितकन्दर्प !, जन्तुजाताभयप्रद ! । नित्योत्सवावताराथं, नाथ! तीर्थं प्रवर्तय ॥ १ ॥ इति विज्ञपयन्तो लोकान्तिका देवाः स्वामिनं प्रणम्य श्रीसमुद्रविजयं राजानं शिवादेवीं च भापन्ते–कोऽयमानन्दस्थाने विपादः?, स्वामी वार्षिकदानानन्तरं त्रिभुवनमानन्दयिष्यति, सर्वेऽपि तुष्टाः ॥ श्रीनेमिनाथचरित्रम् ॥

श्रीमहावीरनिर्वाणात्२५० वर्षैः२३ पार्श्वनाथनिर्वाणम् ,श्रीपार्श्वात्८३ वर्षसहस्रैः७५० वर्षैः २२नेमिः,श्रीनेमेः पञ्चलक्षवर्षैः २१श्रीनमिः, श्रीनमेः षड्वर्षलक्षैः २०श्रीसुव्रतः, श्रीसुव्रतात्५४ लक्षवर्षैः १९श्रीमल्लिः,श्रीमल्लेः एककोटिसहस्रवर्षैः १८श्रीअरः, श्रीअरात् एककोटिसहस्रवर्षोनपल्यचतुर्थांशेन १७श्रीकुन्थुः,श्रीकुन्थोः पल्योपमार्द्धेन १६श्रीशान्तिः,श्रीशान्तेः त्रिभिः पल्यभागैरूनसागरत्रयेण १५ श्रीधर्म्मः,श्रीधर्म्माच्चतुःसागरैः १४श्रीअनन्तः,श्रीअनन्तान्नवसागरैः १३श्रीविमलः,श्रीविमलात् त्रिंशत्सागरैः १२श्रीवासुपूज्यः, श्रीवासुपूज्यात्५४ सागरैः ११श्रीश्रेयांसः,श्रीश्रेयांसात् सागर१०० वर्षलक्ष६६ वर्षसहस्र२६ न्यूनैः एककोटिसागरैः १०श्रीशीतलः, श्रीशीतलात्९ कोटिसागरैः ९श्रीसुविधिः,श्रीसुविधेः९० कोटिसागरैः ८श्रीचन्द्रप्रभः,श्रीचन्द्रप्रभात् नवशतकोटिसागरैः ७श्रीसुपार्श्वः,श्रीसुपार्श्वान्नवसहस्रकोटिसागरैः ६श्रीपद्मप्रभः, श्रीपद्मप्रभान्नवतिसहस्रकोटिसागरैः ५श्रीसुमतिः,श्रीसुमतेर्नवकोटिलक्षसागरैः ४श्रीअभिनन्दनः, श्रीअभिनन्दनाद्दशकोटिलक्षसागरैः ३श्रीसम्भवः, श्रीसम्भवात् त्रिंशत्कोटिलक्षसागरैः २श्रीअजितः, श्रीअजितात्

कोटिलक्षसागरैः श्रीआदिनाथः, जिनान्तराणि ॥

(सू० २०९)'जूअवज्जं सव्वं भणियव्वं' अह वड्ढइ सो भयवं दियलोयचुओ अणोवमसिरीओ। देवगणसंपरिवुडो नंदाइ सुमंगला सहिओ ॥ १ ॥ असिअसिरओ सुनयणो बिंबुट्ठो धवलदंतपंतीओ। वरपउमगब्भगोरो फुल्लुप्पलगंधनीसासो ॥ २ ॥ जाईसरो य भयवं अप्परिवडिएहिं तीहिं नाणेहिं। कंतीहि अ बुद्धीहि अ अब्भहिओ तेहिं मणुएहिं ॥३॥ तालफलाहयभइणी पत्तित्ति मारवणा, देसूणगं च वरिसं सक्कागमणं च वंसठवणा य। सक्को वंसट्ठवणे इक्खु अगू तेण हुंति इक्खागा ॥४॥ भोगसमत्थं नाउं वरकम्मं तस्स कासि देविंदो। दुण्हं वरमहिलाणं वहुकम्मं कासि देवीओ ॥५॥ छप्पुव्वसयसहस्सा पुव्विं जायस्स जिणवरिंदस्स। तो भरह बंभि सुंदरि बाहुबली चेव जायाइं ॥६॥ देवी सुमंगलाए भरहो बंभी य मिहुणयं जायं। देवीइ सुनंदाए बाहुबली सुंदरी चेव ॥७॥ अउणापन्नं जुयले पुत्ताण सुमंगला पुणो पसवे। नीईणमइक्कमणे निवेयणं उसभसामिस्स ॥८॥ हक्कारे मक्कारे धिक्कारे चेव तिन्नि नीईओ। पढमबिइयाण पढमा तईयचउत्थाण अभिनवा बिईया ॥९॥ पंचम छट्ठस्स य सत्तमस्स तईया अभिनवा चेव। सेसाओ दंडनीई माणवगनिहीउ[हुंति]भरहस्स ॥१०॥ राया करेइ दंडं सिट्ठे ते बिंति अम्हऽवि स होउ। मग्गह य कुलहरं सो बेइ उसभो अ भे राया ॥११॥ आभोएउं सक्को उवागओ तस्स कुणइ अभिसेयं। मउडाइ अलंकारं नरिंदजोगं च से कुणइ ॥१२॥ भिसिणिपत्तेहि इअरे उदयं घित्तुं छुहंति पाएसु। साहु विणीआ पुरिसा विणीअनयरी अह निविट्ठा ॥१३॥ आसा हत्थी गावो गहियाइं रज्जसंगहनिमित्तं। घित्तूण एवमाई चउव्विहं संगहं कुणइ ॥१४॥ उग्गा भोगा रायन्न खत्तिया संगहो भवे चउहा। आरक्खिगुरुवयंसा सेसा जे खत्तिया ते उ ॥१५॥ आसी अ कंदहारा मूलाहारा य पत्तहारा य। पुप्फफलभोइणोवि य जइआ किर कुलगरो उसभो

॥१५॥ अगणिस्स य उट्ठाणं वणघंसा दट्ठु भीय परिकहणा। पासेसुं परिछिंदह गिण्हह पागं च तो कुणह ॥१६॥ पक्खेव डहण- मोसहि कहणं निग्गमण हत्थिसीसम्मि। पयणारंभपवित्ती ताहे कासी य ते मणुया ॥ १७॥ पंचेव य सिप्पाइं घड ? लोहं२ चित्त३णंत४कासवए५। इक्किक्कस्स य इत्तो वीसं वीसं भवे भेया ॥१८॥ लेहं लिवीविहाणं जिणेण बंभीइ दाहिणकरेणं। गणियं संखाणाद् सुन्दरीइ वामेण उवइट्ठं ॥१९॥ भरहस्स रूवकम्मं नराइलक्खणमहोइअं बलिणो ॥

(सू० २१२) एगं वाससहस्सं० उसभो वरवसभगई घेत्तूण अभिग्गहं परमघोरं। वोसट्ठचत्तदेहो विहरइ गामाणुगामं तु ॥१॥ बहली अडंबइल्ला जोणगविसओ सुवन्नभूमी अ। आहिंडिया भगवया उसभेण तवं चरंतेण ॥२॥ नवि ताव जणो जाणइ का भिक्खा केरिसा व भिक्खयरा ?। ते भिक्खमलभमाणा वणमज्झे तावसा जाता ॥३॥ नमिविनमीणं जायण नागिंदो वेज्जदाण वेयड्ढे। उत्तरदाहिणसेढी मट्ठी पन्नास नगराणि॥४। भयवंपदीणमणसो संवच्छरमणसिओ विहरमाणो। कन्नाहि निमंतिज्जइ वत्था- भरणासणेहिं च ॥५॥ अथ गजपुरे बाहुबलेः सोमयशाःसुतः। श्रेयांसस्तत्सुतः स्वप्ने, मेरुं सुधोज्ज्वलं व्यधात् ॥१॥ कोऽपि श्रेयांससाहाय्यात्, शत्रुकान्तो महाभटः। जयी जात इति स्वप्नेऽपश्यत् सोमयशा नृपः ॥२॥ रविमण्डलतः स्रस्तः,करौघो घटितः पुनः। श्रीश्रेयांसकुमारेण, स्वप्नं श्रेष्ठीति लब्धवान् ॥ ३ ॥ प्रातरन्तःसभं भावी, श्रेयांसस्योदयो महान्। कोऽपीति मन्त्रयित्वा ते, स्वस्ववेश्म त्रयोऽप्यगुः ॥४॥ लाति श्रीऋषभः किञ्चिन्नेति कोलाहलं नृणाम्। श्रुत्वा गवाक्षतोऽधावद्, युवराजः प्रभुं प्रति ॥५॥ प्रभोर्दर्शनतो जातिस्मृतिं प्राप स भाग्यतः। तस्येक्षुरसकुम्भौघं, ढोकयामास कोऽप्यथ। ६॥ स प्राह—भगवन्! प्रसारय करौ, निस्तारय मां, गृहाण योग्यममुं, अत्र कविघटना—स्वाम्याह दक्षिणं हस्तं,कथं भिक्षां न लासि? भोः!। स प्राह दातृहस्तस्याधो

भवामि कथं यतः ? ॥१॥ पूजाभोजनदानशान्तिककलापाणिग्रहस्थापनाचोक्षप्रेक्षणहस्तकार्पणमुखव्यापारबद्धस्त्वहं । इत्युक्त्वा स्थिते दक्षिणकरे वामहस्तो ब्रूते—वामोऽहं रणसम्मुखाङ्कगणनावामाङ्गशय्यादिकृद् ,द्यूतादिव्यसनी त्वसौ,स तु जगौ चोक्षोऽसि,न त्वं शुचिः ॥२॥ राज्यश्रीर्भवताऽर्जिताऽर्थिनिवहस्त्यागैः कृतार्थीकृतः, सन्तुष्टोऽपि गृहाण दानमधुना तन्वन् दयां दानिषु । इत्यब्दं प्रतिबोध्य हस्तयुगलं श्रेयांसतः कारयन, प्रत्यग्रेक्षुरसेन पूर्णमृषभः पायात् स वः श्रीजिनः ॥३॥ माइज्ज घडसहस्सं अहवा माइज्ज सागरा सव्वे । एयारिसलद्धीओ सो पाणिपडिग्गही होइ ॥ ४ ॥ भुवणं जसेण भयवं रसेण भवणं धणेण पडिहत्थो । अप्पा निरुवमसुक्खे सुपत्तदाणं महग्घविअं ॥५॥ रिसहेससमं पत्तं निरवज्जं इक्खुरससमं दाणं । सेअंससमो भावो हविज्ज जइ मग्गियं हुज्जा ॥६॥ उसभस्स उ पारणए इक्खुरसो आसि लोगनाहस्स । सेसाणं परमन्नं अमयरसरसोवमं आसि ॥७॥ कल्लं सव्विड्ढीए पूएमऽहं दट्ठु धम्मचक्कं तु । विहरइ सहस्समेगं छउमत्थो भारहे वासे ॥८॥ वाससहस्सं उग्गं तवमाइगरस्स आयरंतस्स । जो किर पमायकालो अहोरत्तं तं तु संकलिअं ॥८॥ विनीतायाः शाखापुरे पुरिमताले ज्ञानोत्पत्तिः ।

(सू० २१२) पासमाणे० तेहिं परिवेढिएणं वृद्धा तु,यमकशमकाभ्यां केवलचक्रोत्पत्त्या वर्द्धापितो भरतः,पूआवसरे सरिसो० ॥२॥ तायम्मि पूइए चक्क पूइअं पूअणारिहो ताओ । इहलोइअं तु चक्कं परलोअसुहावओ ताओ ॥ ३ ॥ भरतेन समं हस्त्यारूढा देवजयध्वनिम् । दुन्दुभिं देशनां श्रुत्वा, हृष्टा श्रीमरुदेव्यभूत् ॥४॥ हर्षाश्रुभिः समं नीलपटलः क्षपितः क्षणात् । वप्रच्छत्रत्रयादिश्रीदर्शनादित्यचिन्तयत् ॥५॥ धिग् मोहविह्वलान् जीवान्, स्वार्थे स्निह्यन्ति जन्तवः । मोहोऽयं परमं दुःखं, मोहान् मे चक्षुषी गते ॥६॥ वत्सोऽयमीदृशीमृद्धिं, प्राप्तो मां न स्मरत्यपि । प्रेषयत्यपि सन्देशं, नेत्यमोहाऽऽप केवलम् ॥६॥ मृत्तुर्युगादीशसमो न

विश्वे, भ्रान्त्वा क्षितौ येन शरत्सहस्रम्। यदर्जितं केवलरत्नमर्घ्यं, स्नेहात्तदेवार्प्यत मातुराशु ॥८॥ मरुदेवा समा नाम्ना, याऽगात् पूर्वं किलेक्षितुं। मुक्तिकन्यां तनूजार्थं, शैवं मार्गं खिलं चिरात् ॥९॥ भरतः स्वामिनं ववन्दे, पंच य पुत्तसयाइं भरहस्स य सत्त नत्तुअ सयाइं। सयराहं पवइआ तम्मि कुमारा समोसरणे ॥१०॥ द्वात्रिंशत्सहस्राणि, कलौ लक्षचतुष्टयम्। वर्षाणां तच्च त्रेतादौ, क्रमाद्द्वित्रिचतुर्गुणम् ॥१॥ तेयालीसं लक्खा वीससहस्सा हवंति वरिसाणं। चउण्ह जुगाणं माणं चतुक्कडीए अ माणमिणं॥ २ ॥ एगा कोडी तेसट्ठि लक्ख तित्तीस सहस्स तिन्नि सया। तित्तीसा य तिभागो चउक्कडी इक्कपुवम्मि ॥३॥ एगा कोडाकोडी सगतीसा लक्ख हुंति कोडीणं। वीससहस्सा कोडी चउक्कडी रिसहस्सवाऊ ॥४॥ अउणट्ठि सयसहस्सा सत्तावीसं भवे सहस्साइं। चत्ता कोडाकोडी वासाणं उसभजिणमाउं ॥५॥ अङ्कतः ५९२७०४० शू० १९, श्रीआदिनाथवृत्तं ॥

अथ स्थविरावल्यां—पढमित्थ इंदभूई बीए पुण होइ अग्गिभूइत्ति। तइए उ वाउभूई तओ विअत्ते सुहम्मे अ ॥ १ ॥ मंडिय मोरियपुत्ते अकंपिए चेव अयलभाइत्ति। मेयज्जे य पभासे गणहरा हुंति वीरस्स ॥ २ ॥ पंचण्हं पंच सया अद्धुट्ठसया य हुंति दुन्नि गणा। दुण्हं च जुअलयाणं तिसओ तिसओ हवइ गच्छो ॥ ३ ॥ सवे य माहणा जच्चा सवे अज्झावया विऊ। सवे दुवालसंगीआ, सवे चउदसपुविणो ॥ ४ ॥ परिनिव्वुया गणहरा जीवंते नायए नव जणा उ। इंदभूई सुहम्मो अ रायगिहे निव्वुए वीरे ॥ ५ ॥ मासं पाओवगया सवेऽवि य सवलद्धिसंपन्ना। वज्जरिसहसंघयणा समचउरंसा य संठाणे ॥ ६ ॥ श्रीवीरपट्टे श्रीसुधर्म्मस्वामी पञ्चमगणधरो बभूव, तत्स्वरूपं चेदं संक्षेपेण—कुल्लागसन्निवेशे धम्मिल्लविप्रस्य भद्दिला भार्या, तत्कुक्षिकन्दरासमुद्भूतः चतुर्दशविद्यानिधानं ५० वर्षान्ते दीक्षा ३० वर्षाणि यावत् श्रीवीरचरणकमलपरिचर्या श्रीवीरमोक्षाद्

द्वादश वर्षाणि छाद्मस्थ्यं, द्विनवति ९२ वर्षान्ते केवलोत्पत्तिः, ततोऽष्टौ वर्षाणि केवलिपर्यायं प्रतिपाल्य सर्वं शतवर्षायुः श्रीजम्बूस्वामिनं स्वपदे संस्थाप्य सिद्धिसौधमध्यास्त। श्रीजम्बूस्वामिस्वरूपं चेदम्—राजगृहे ऋषभधारिण्योः पुत्रः पञ्चमस्वर्गात् च्युतोऽवतीर्णः, जन्म, जम्बूनाम, क्रमेण शैशवातिक्रमे श्रीसुधर्म्मस्वामिसमीपे धर्म्मश्रवणं तुर्यव्रतोच्चारः पित्रोर्दृढाग्रहवशेनाष्टकन्यापाणिग्रहणं, रात्रौ ताः प्रतिबोधयता चौर्यार्थागतप्रभवस्यापि प्रतिबोधः, प्रातः ५२७ सहितस्य प्रव्रज्या, ९९ कोटीसुवर्णानि परिहृत्य तपस्तप्यमानस्य क्रमेण केवलं, श्रीप्रभवं स्वपदे न्यस्य सिद्धः। बारवरिसेहिं गोयमु सिद्धो वीराउ वीसहिं सुहम्मो। चउसट्ठीए जंबू वुच्छिन्ना तत्थ दस ठाणा ॥ १ ॥ मण १ परमोहि २ पुलाए३ आहारग४ खवग५ उवसमे ६ कप्पे ७। संजमतिय ८ केवलि ९ सिज्झणा १० य जंबुम्मि वुच्छिन्ना ॥ २ ॥ लोकोत्तरं हि सौभाग्यं, जम्बूस्वामिमहामुनेः। अद्यापि तं पतिं प्राप्य, शिवश्रीर्नान्यमिच्छति ॥ ३ ॥ नवणउई कंचणकोडीआउ, जेणुज्झिया अट्ठ य बालिआओ। सो जंबुसामी पढमो मुणीणं, अपच्छिमो नंदउ केवलीणं ॥ ४ ॥ जम्बूसमः पुरारक्षो, न भूतो न भविष्यति। शिवाध्ववाहकान् साधून्, चौरानपि चकार यः ॥५॥ प्रभवोऽपि प्रभुर्जीयाच्चौर्येण हरता धनम्। लेभेऽनर्घ्यांचौर्यहरं, रत्नत्रितयमद्भुतम् ॥ १ ॥ अन्यदा गणे श्रीसङ्घे च शिष्यार्थमुपायोगो दत्तः। तत्र तथाविधयोग्यशिष्यादर्शने परतीर्थिषु तदुपयोगे शय्यम्भवं भट्टं यज्ञं यजन्तं राजगृहे ददर्श, तत्र गत्वा साधूभ्यां 'अहो कष्टमहो कष्टं,तत्त्वं न ज्ञायते परं' इति वचः श्रावितः, प्रतिमया प्रतिबोधो, दीक्षा, क्रमेण श्रीप्रभवः श्रीशय्याम्भवं स्वपदे न्यस्य स्वर्ग्गलोकमलंचकार। श्रीशय्यम्भवसूरिः साधानमुक्तनिजभार्याप्रसूतमनकाख्यपुत्रहिताय निर्यूढवान् श्रीदशवैकालिकं। सिज्जंभवं गणहरं जिणपडिमादंसणेण पडिबुद्धं। मणगपिअरं दसकालियस्स निज्जुहगं वंदे ॥१॥ मणगं पडुच्च सिज्जंभवेण निज्जूहिया

दसऽज्झयणा । वेयालियाइ ठविया तम्हा दसकालियं णामं ॥२॥ छहिं मासेहिं अहीयं अज्झयणमिणं तु अज्झमणगेणं। छम्मासा परिआओ अह कालगओ समाहीए ॥३॥ आणंदंसुप्पायं कासी सिज्जंभवा तहिं थेरा। जसभद्दस्स य पुच्छा कहणा अ विआलणा संघे ॥४॥ क्रमेण श्रीयशोभद्रं स्वपदालङ्कृतीकृत्य श्रीवीरादष्टानवति९८ वर्षैः स्वर्जग्मुः। श्रीयशोभद्रस्य द्वौ शिष्यौ-श्रीभद्रबाहुश्रीसम्भूतिविजयौ,उवसग्गहरं थुत्तं काऊणं जेण संघकल्लाणं। करुणापरेण विहियं स भद्दबाहू गुरू जयउ ॥१॥ अत्र श्रीस्थूलभद्रो द्वादश वर्षाणि यावत्कोशागृहे स्थितः,तदन्ते कोशागृहान्नन्देनाकार्य मुद्रादानाय अभ्यर्थितः पितृमरणं मनसि सम्भाव्य स्वयं दीक्षां गृहीतवान्, पश्चाच्च श्रीसम्भूतविजयपार्श्वे गत्वा व्रतप्रतिपत्तिः,तेषामादेशात्कोशागृहे चतुर्मासं कृतवान्, तं भगवन्तं स्वपदे न्यस्य श्रीसम्भूतिविजयः श्रीवीरात् १७० वर्षे श्रीभद्रबाहुश्च स्वर्गालङ्कारोऽजायत। गिरौ गुहायां विजने वनान्तरे, वासं श्रयन्तो वशिनः सहस्रशः। हर्म्येऽतिरम्ये युवतीजनान्तिके, वशी स एकः शकटालनन्दनः (नन्दनः) ॥१॥ योऽग्नौ प्रविष्टोऽपि हि नैव दग्धश्छिन्नो न खड्गाग्रकृतप्रचारः। कृष्णाहिरन्ध्रेऽप्युषितो न दष्टो,नाक्तोऽञ्जनागारनिवास्यहो यः॥२॥ वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनं, शुभ्रं धाम मनोहरं वपुरहो नव्यो वयःसङ्गमः। कालोऽयं जलदाविलस्तदपि यः कामं जिगायादरात्, तं वन्दे युवतिप्रबोधकुशलं श्रीस्थूलभद्रं मुनिम् ॥३॥ रे काम ! वामनयना तव मुख्यमस्त्रं, वीरा वसंतपिकपञ्चमचन्द्रमुख्याः। त्वत्सेवका हरिविरञ्चिमहेश्वराद्या, हा हा हताश ! मुनिनाऽपि कथं हतोऽसि? ॥४॥ श्रीनन्दिषेणरथनेमिमुनीश्वरार्द्रबुद्ध्या त्वया मदन ! रे मुनिरेष दृष्टः। ज्ञातं न नेमिमुनिजम्बुसुदर्शनानां, तुर्यो भविष्यति निहत्य रणाङ्गणे माम् ? ॥५॥ श्रीनेमितोऽपि शकटालसुतं विचार्य, मन्यामहे वयममुं भटमेकमेव। देवोऽद्रिदुर्गमधिरुह्य जिगाय मोहं, यन्मोहनालयमयं तु वशी प्रविश्य ॥६॥ स्त्रीविभ्रमैश्चलितलोलमना न धीरः,श्रीस्थू-

लभद्र इव तादृशसङ्कटेऽपि। चूर्णायते दृषदयोऽपि जलायते च, वैडूर्यमेति विकृतिं ज्वलनात् पुनर्न (न वज्रं) ॥ ७ ॥ रथकाराग्रे कोशयोक्तं–न दुकरं अंबयलुंबितोडणं, न दुकरं सरिसवनचियाए। तं दुकरं तं च महाणुभावं, जं सो मुणी पमयवणम्मि वुच्छो ॥ ८ ॥ श्रीस्थूलभद्रो महागिरिसुहस्त्योः पदं दत्त्वा श्रीवीरात् २१५ वर्षे स्वर्गतः। केवली चरमो जम्बूस्वाम्यथ प्रभवः प्रभुः। शय्यम्भवो यशोभद्रः, सम्भूतिविजयस्तथा ॥ १ ॥ भद्रबाहुः स्थूलभद्रः, श्रुतकेवलिनो हि षट्। वुच्छिन्ने जिणकप्पे काही जिणकप्पतुलणमिह धीरो। तं वंदे मुणिवसहं महागिरिं परमचरणधरं ॥२॥ वंदे अज्जसुहत्थिं मुणिपवरं जेण संपई राया। रिद्धिं सव्वपसिद्धं चारित्ता पाविओ परमं ॥

५५ पत्रे 'पियगंथेहिंतो'त्ति सुस्थितसुप्रतिबुद्धशिष्याः प्रियग्रन्थसूरयः हर्षपुरेऽजमेर्वासन्ने जिनमन्दिर ३०० लौकिकदेवभवन ४०० ब्राह्मण १८००० वणिग् ३६००० आराम ९०० वावी ८०० कूप २०० सत्रागार ७००, तत्र सुभटपालो राजा, प्रियग्रन्थसूरिः, ब्राह्मणैर्यज्ञे छागो हन्तुमारब्धः,अम्बिका समागत्य छागमधिष्ठितवती,ततः स छागो नभसि भूत्वोक्तवान्–हनिष्यत नु मां हुत्यै, बध्नीतायात मां हत। युष्मद्वन्निर्दयः स्यां चेत्तदा हन्मि क्षणेन वः ॥ १ ॥ यत्कृतं रक्षसां द्रङ्गे, कुपितेन हनूमता। तत्करोम्येव वः स्वस्थः, कृपा चेन्नान्तरा भवेत् ॥२॥ कस्त्वं प्रकाशयात्मानं?,तेनोक्तं पावकोऽस्म्यहम्। ममैनं वाहनं कस्माज्जिघांसथ पशुं वृथा ॥३॥ इहास्ति श्रीप्रियग्रन्थः; सूरीन्द्रः समुपागतः। तं पृच्छत शुचिं धर्म्मं, समाचरत शुद्धितः ॥ ४ ॥ यथा चक्री नरेन्द्राणां, धानुष्काणां धनञ्जयः। तथा धुरि स्थितः साधुः, स एकः सत्यवादिनाम् ॥५॥ जोऽवंतीए सिरिरक्खिवएण निज्जामिओ सुभत्तीए। सिरिवइरसुत्तदाई स भद्दगुत्तो गुरू जयउ ॥१॥ महागिरिः सुहस्ती च, सूरिः श्रीगुणसुन्दरः। श्यामार्यः स्कन्दिला-

चार्यो, रेवतीमित्रसूरिराट् ॥ २ ॥ श्रीधर्म्मो भद्रगुप्तश्च, श्रीगुप्तो वज्रसूरिराट् । युगप्रधानप्रवरा, दशैते दशपूर्विणः ॥ ३ ॥ सिंहगिरिः गुरोः पार्श्वे, सुनन्दा सोदरोऽग्रहीत । प्रव्रज्यामार्यसमितो, घनगिरिश्च तत्पतिः ॥४॥ तुंबवणसन्निवेसाओ० ॥५॥ यः पालनस्थः श्रुतमध्यगीष्ट,षाण्मासिको यश्चरिताभिलाषी । त्रिवार्षिकः सङ्घममानयद्यो,योऽध्यापयत् साधुगणं प्रकामम् ॥६॥ जो गुज्झगेहिं बालो निमंतिओ भोयणेण वासंते । निच्छइ विणीयविणओ तं वयररिसिं नमंसामि ॥ ७ ॥ पूर्वभवमित्रैर्जृम्भकैरटव्यां वृष्टौ कोहलभिक्षया परीक्ष्य वैक्रियलब्धिर्दत्ता,उज्जेणीए जो जंभगेहिं आणक्खिओ७६६ ग्रीष्मे घेवरैः परीक्ष्य नभोगविद्या दत्ता, जस्स अणुन्नाए वायगत्तणे दसपुरम्मि नयरम्मि । देवेहिं कया महिमा पयाणुसारिं नमंसामि ॥१॥ जो कन्नाय धणेण य निमंतिओ जुव्वणम्मि गिहवइणा । नयरम्मि कुसुमनामे तं वइररिसिं नमंसामि ।'२॥ जेणुद्धरिया विज्जा आगासगमा महापरिन्नाओ । वंदामि अज्जवइरं अपच्छिमो जो सुअधराणं ॥१०॥ दुर्भिक्षे संघं पट्टे संस्थाप्य महापुरीं नीतवान्—हुताशनाद्यक्षवनात् सुमानि, माहेश्वरीं यस्तु पुरीं निनाय । तत्रैव बौद्धप्रतिबोधनाय, प्रभावनां यो महतीं चकार ॥ १ ॥ प्रमादमेकं निजकं निरीक्ष्य, जज्ञे गुरुर्योऽनशनाभिलाषी । सोपारके वज्रमुनिं प्रहित्य,निजोत्तमार्थं समसृत्रयद्यः ॥१३॥ श्रीवज्रस्वामिशिष्यो वज्रसेनः सोपारके जिनदत्तभार्येश्वरीगृहे लक्षस्थालीपाके विषप्रक्षेपे प्रहरान्ते सुभिक्षं भावीत्यूचे, नागेन्द्रचन्द्रनिर्वृत्तिविद्याधरदीक्षा, तेभ्यः४ शाखा ॥

सो जयउ वुड्ढवाई१ सिद्धसेण२ जखवुड३ हरिभद्दो४। सिरिबप्पहट्टसूरी५ पालित्तो६ अभयदेवो७ अ ॥७॥ सिरिमलयगिरिसूरी८ सिरिजसभद्दो अ९ हेमसूरी य१० । एवमवरेऽवि थविरा जयंतु जुगपवरसूरिगुणा॥८॥ इति स्थविरावली समाप्ता ॥

(सा०. २५) आयामए सोवीर० आयामादौ छुसिनं शङ्क्या, यतोऽस्मिन्नी अच्छित्तिर्देवता, सा च नैकस्थानश्मशान-

सम्भवे मत्स्यादिमरणेऽपि च नद्यादिजलवत् पवित्रैव, मृगनाभिपोहीसकगोरोचननखाङ्कणीपंकजवाधिचमरहस्तिदन्तनखधूपपाणिग्रहणार्थसधाखलितवस्त्रमलिनकृतखर्ज्जूरसेल्लरकपूगीफलदीवाईगुलकोरकवस्त्रटिप्पनकपट्टकूलरागकृतपादिघृतनाहरनसाबद्धसूर्पकोपानहकरपत्रिकापट्टसूत्रकम्बलमायूरच्छत्रकेतकीपरिमलोत्पत्तिः भक्षिताशुचिगोदुग्धादिवस्तुनामुच्छिष्टशिशूनां तच्छुसेरव्यवहारात्, सेकितचणकपृथुकपर्प्पटादिभक्षिणां च, उक्तश्च--वुट्ठहय घुग्घरी व(उल)वकला य अन्नंपि अद्धसिन्नं वा। जह होइ इह न छुत्ती तज्जलमवसावणाइ तहा ॥१॥ तथा "तहेवुच्चावयं पाणं० ॥१॥ जं जाणिज्ज चिराधोअं० ॥१॥ अजीवं परिणयं नच्चा० ॥ थोवमासायणट्ठाए०॥२॥ तं च अच्चंबिलं पूअं० ॥१॥ दशवैकालिके। आयावणट्ठमेणं जिह्वामूलम्मि धम्मरुइणो उ। गमणऽन्नगाम भिक्खट्ठया य देवस्स अणुकंपा ॥३॥ कुंकुणरूवविउव्वण अंबिल छट्ठेमऽहं पिअसु पाणं। छट्ठेहित्ति अ बिइओ तं गिण्हसु णेत्ति उवओगं ॥४॥ ओघनिर्युक्तौ, कंजियआयामासइ संस० निशीथभा० पी० पत्र ३६, आयामगं चेव जवोदगं च, सीयं सोवीरं च जवोदणं च। नो हीलए पिंडं नीरसं तु, पंतकुलाइं परिव्वए जे स भिक्खू ॥१॥ उत्तराध्ययने। उस्सेइम संसेइम चाउलउदगं तिलतुसजवाणं। आयामं सोवीरं सुद्धवियडं जलं नवहा ॥३॥ श्रीकल्पे, इत्यादिसिद्धान्तोक्तात् 'अंबं तंबच्छीए अपुप्फियं पुप्फदंतपंतीए। नवसालिकंजियं नववहूइ कडुएण मे दिन्नं ॥१॥ गुरुपृष्टैरिदं वाक्यं, श्रीपादलिप्तसूरिभिः। विहृत्याम्बां गतैः क्षुल्लावस्थायामुक्तमञ्जसा ॥१॥ आरनालगलदाहशङ्कया, मन्मुखादपगता सरस्वती। तेन वैरिकमलाकचग्रहव्यग्रहस्त! न कवित्वमस्ति मे ॥२॥ श्रीजयसिंहदेवस्य, सभायां सिद्धचक्रिणः। श्रीहेममुनिना राज्ञा, पृष्टेनोचे वचो ह्यदः ॥४॥ इत्यादिना पूर्वाचार्यप्रणीतत्वाच्च, तथा--जह य पसूया नारी जरिआई मल्लिगेयि पीअंती। उण्होदयं न दूसइ किं पुण को(घ)वधवणाई ॥१॥ एवं च स्थिते

कल्प-
समर्थनं
॥ ५० ॥

केचन एकाशनादौ प्रत्याख्याने भोजनादुत्थिता अपि इक्षुरससितादिजलं खर० तक्रं च आम्ल० जलस्थाने स्वयं पिबन्ति श्राद्ध-
जनयोजितघृतं भक्तं गुरुयोजितघृतं चूरिमकपिण्डः साधोर्निर्विकृतिके कल्प्यं कल्पयंति परकीयमन्त्रश्रावणादिपानमतिनीरस-
मपि यदशनाहारतया वर्णयन्ति काञ्जिकं चानन्तकायं वदन्ति तत्तेषामेवाहारलांपट्यं धर्म्मागमनिरपेक्षतां दुर्गतेरभीरुतां केवलं
व्यनक्ति, अस्तु वा परं किमपि, उष्णमपि जलं पवित्रं, जन्मनि मात्रा पानात्, अङ्गारजलयोगेन मलिनभाजनादिशुद्धेः सूतकयोरंते
उष्णोदकेनैव स्नानाच्च ॥ आपः स्वभावतो मेध्याः, किं पुनर्वह्नितापिताः १। ऋषयस्तत् प्रशंसन्ति, शुद्धमुष्णेन वारिणा ॥ १ ॥
गीतायां, उष्णं च त्रिदण्डोत्कलितमेव ग्राह्यं, न कोष्णं, मिश्रत्वात्, अगलितेऽपि मध्यपिण्डे पारीस्थिततप्तघृतवत् इत्यादि ॥

(सू० ५९) उवसमसारं खु सामन्नं० मित्ति मिउमद्दवत्ते छत्तिअ दोसाण छायणे होइ। मित्ति अ मेराइ ठिओ दुत्ति दुगुं-
छामि अप्पाणं ॥१॥ कत्ति कडं मे पावं डत्ति अ डेवेमि तं उवसमेणं। एसो मिच्छादुक्कडपयक्खरत्थो समासेण ॥२॥ जं दुक्करंति
मिच्छा तं चेव निसेवए पुणो पावं। पच्चक्खमुसावाई माया नियडी पसंगो य ॥३॥ ज्ञातं विपर्यये क्षुल्लकुम्भकारकयोर्यथा। काणी-
कुर्वन् कुलालेन, क्षुल्लो भाण्डानि कर्करैः वारितो वक्ति भो भद्र!, मिथ्या दुष्कृतमस्तु मे ॥१॥ पुनः पुनस्तथाकारे, कुलालेन स
शिक्षितः एवं मिथ्यादुष्कृतं न देयम् १॥ एवं तु देयं-अन्यदा श्रीमहावीरः, कौशाम्ब्यां समवासरत्। वन्दितुं तत्र चन्द्रार्कौ,
सविमानौ समीयतुः॥१॥ तथापि चन्दना ज्ञात्वा, दक्षाऽस्तसमयं ततः। निर्गत्यागान्निजे स्थाने, तत्रैवास्थान्मृगावती ॥२॥ स्वस्थानं
गतयोश्चन्द्रसूर्ययोरथ विस्तृते। तमस्यगाद् द्रुतं भीता, सा साध्वीनां प्रतिश्रये ॥३॥ तत्रेर्यापथिकीं साऽथ, प्रतिक्रम्य प्रवर्त्तिनीम्।
शयनस्थां प्रणम्योचे, मातर्मे क्षम्यतामयम् ॥४॥ चन्दना चन्दनाभाभिर्वाणीभिस्तामथाभ्यधात्। भद्रे! भद्रकुलोत्पन्ने! किं ते

मिथ्यादु-
ष्कृते क्षुल्लः
मृगावती च

॥ ५० ॥

साम्प्रतमीदृशम् ? ॥५॥ साऽप्यूचे मयका पापं, कृतं दुष्कृतमेतकम्। करिष्ये नेदृशं भूय, इत्युक्त्वा न्यपतत्पदोः॥६॥ निद्राऽथागात् प्रवर्त्तिन्या, मृगावत्याः स्वभावतः। मिथ्यादुष्कृतकारिण्या, जज्ञे केवलमुज्ज्वलम् ॥७॥ सर्प्पव्यतिकरेणाथ, प्रबुद्धा चन्दना तदा। अवाप केवलज्ञानं, क्षमयन्ती मृगावतीम् ॥८॥ न मुञ्चति क्रुधं योऽपि, श्रीमद्वार्षिकपर्वणि। अपाङ्क्तेयः स सङ्घे स्यान्महास्थाने यथा द्विजः ॥९॥ तथा हि खेडवास्तव्यो, रुद्रो नाम द्विजः पुरा। वर्षाकाले हलं लात्वा, केदारान् कृष्टुमभ्यगात् ॥१०॥ बलीवर्दो गलिस्तस्य, कर्षतः समुपाविशत्। तोत्रेण ताडयामास, ततस्तं निर्दयो द्विजः ॥ ११ ॥ तथाऽप्यनुत्थिते तस्मिँस्तोत्रे भग्ने क्रुधा ज्वलन्। केदारमृत्तिकाखण्डैरजघान समंततः ॥१२॥ केदारमयमृत्खण्डैराहत्याहत्य सर्वथा। विधाय मृत्तिकाकूटं, मुखश्वासं रुरोध सः ॥१३॥ तावत्कदर्थयामास, मृतो यावदयं गलिः। मृतं मत्वा द्विजः पश्चात्पश्चात्तापं भृशं व्यधात् ॥१४॥ महास्थानेषु गत्वाऽसौ, निजवृत्तमचीकथत्। अनुपशान्तकोपत्वादपांक्तेयः कृतश्च तैः ॥७॥ यथा स विप्रः किल तीव्रकोपात्, कृच्छ्रैरशोध्यो बहिरेव चक्रे। कोपं न यः पर्वदिनेऽपि जह्यात्, स सङ्घबाह्यो जिनवाक्यमेतत् ॥ ८ ॥ इति श्रीकल्पान्तराश्रितं किञ्चिदलेखीति ॥१॥ ग्रन्थाग्रं ९७७ ॥ अनाभोगात् किञ्चित् किमपि मतिवैकल्यवशतः, किमप्यौत्सुक्येन स्मृतिविरहदोषेण किमपि। यदुत्सूत्रं सूत्रे कथमपि मयाऽऽख्यातमखिलं, क्षमन्तां धीमन्तस्तदु मम दयापूर्णहृदयाः ॥ १ ॥ वाचयितृवाचकयोर्नाम ग्राह्यं। नगररह्वचक्कपउमे० सो संघरयणायरो जयउ ॥२॥ उर्वी गुर्वी तदनु जलदः सागरः कुम्भजन्मा, व्योमोद्योतौ रविहिमकरौ तौ च यस्याङ्घ्रिपीठे। स श्रौढः श्रीजिनपरिवृढः सोऽपि यस्य प्रणन्ता, स श्रीसङ्घः त्रिभुवनगुरुः कस्य न स्यान्नमस्यः ? ॥ २ ॥ नक्षत्राक्षतपूरितं मरकतस्थालं विशालं नभः, पीयूषद्युतिनालिकेरकलितं चन्द्रप्रभाचन्दनम्। यावन्मेरुकरे गभस्तिकटके धत्ते धरित्री

वधू, तावन्नन्दतु धर्म्मकर्म्मनिरतः श्रीसङ्घभट्टारकः ॥३॥ स्थालं सम्यक्त्वरत्नं तदुपरि विलसत्तन्दुलाः सद्गुणालीः, सज्ज्ञानं नालिकेरः फलममलमिदं चन्दनं शीलरत्नम् । श्रद्धा दूर्वाङ्कुराली विमलतरयशः स्वच्छवासांसि भव्या, इत्थं वर्द्धापनं वः कथयितुमुदिता देवता शासनस्य ॥४॥ पुरिमचरिमाण० गाथा । शक्रस्तवं यावत् १, शक्रस्तवगर्भावतारसंश्चाराः २ स्वप्नविचारगर्भस्थाभिग्रहौ ३, जन्मोत्सवक्रीडाकुटुम्बविचारः ४, दीक्षाज्ञानपरिवारमोक्षाः ५ श्रीपार्श्वनेमिनाथचरित्रान्तराणि ६ श्रीआदिचरित्रं स्थविरावली७, सामाचारीमिथ्यादुष्कृतिः८, श्रीकालिकाचार्यकथा९ (नव व्याख्यानानि) इति कल्पसमर्थनम् ॥ संवत् १९८३ विक्रमार्के पोषशुक्ल १३ त्रयोदश्यां पुण्यपत्तने रत्नपुरीनिवासिरामलालसूनुना ऋषभचन्द्रेणालेखि ॥ शुभं भवतु ॥ श्री ॥

## ॥ इति श्रीकल्पसमर्थनं समाप्तम् ॥